ननु भावोऽभावो वा उभययथापि प्रमेयम् इत्यत्र भावत्वाभावत्वयोर्व्याप्यतावच्छेदकयोरग्रहादनुमानं न स्यात् तदन्यान्यत्वरूपस्यान्यतरत्वस्य लिङ्ग-

---

"नन्वित्यादि।" इदं नीलत्वेन प्रतीयमानं भावोऽभावो वा। भावत्वाभावत्वयोः, तत्त्वयोरित्यर्थः। लिङ्गत्वाभावादप्रसिद्धत्वेन तत्त्वासम्भवात्। भावत्वाभावत्वे-

---

प्रतिबध्यतावच्छेदकत्वभ्रमं निराकरोति "एवमिति"। तद्भ्रमोऽपीत्यस्य व्यावर्त्तकधर्म्मदर्शनदशायामित्यादिः। तथाच संशयनिश्चयसाधारणज्ञानत्वमेव तत्प्रतिबध्यतावच्छेदकमिति-भावः। विशेषदर्शनस्य, तद्व्यावर्त्तकदर्शनस्य। विपरीतज्ञानमात्रेति। तज्ज्ञानसामान्येत्यर्थः। अग्रे, धूमत्वपुरस्कारेणेत्यादौ। प्रमेयमित्यस्य समानलिङ्गं पक्षरूपविशेष्यवाचकपदं पूरयति "इदमिति"।

इदन्त्वस्य तेजोऽभावत्वात्मकत्वे तदवच्छिन्ने भावत्वसंशयायोगात्तद्विवृणोति "नीलत्वेनेति"। मूलेऽनुमानम् अनुमितिः। उभययथापीत्यनेनेदं--प्रमेयमितिज्ञानस्यावधारणत्वलाभात्तादृशज्ञानस्यानुमितिहेतुत्वावश्यकत्वं लभ्यते, तथाच इदं भावोऽभावो-वेतिसंशयस्थले जायमानमिदमुभयथापि प्रमेयमित्यनुमितिस्तवनये न स्यादित्यर्थः। अनुमित्यनुपपत्तौ हेतुरग्रहादित्यन्तम्। अग्रहादित्यस्य पक्षधर्म्मतानिश्चयप्रकारतयेत्यादिः। अग्रे तादात्म्यसम्बन्धेनान्यतरवतो लिङ्गत्वमुपेक्ष्यान्यतरस्य धर्म्मस्य लिङ्गतायां सिद्धान्तयिष्यमाणतया अत्रापि

त्वाभावादिति-चेन्न, भावत्वाभावत्वान्यान्यधर्म्मवत्त्वस्य लिङ्गत्वात् । एवं धूमालोकान्यतरत्वमपि लिङ्गम् ।

---

त्यादिकं केवलान्वय्यनुमानमतिरिक्ताश्चाभावमभ्युपेत्य । केवलान्वयिनः साध्यस्य धर्म्ममात्रमेव व्याप्यमिति तु मन्तव्यम् । "एवमिति" । लिङ्गं व्याप्यत्वे, लिङ्गताव-च्छेदकं वा वह्नौ ।

---

भावत्वादिधर्म्मवृत्तेरेव लिङ्गतावच्छेदकस्याग्रहे मूलतात्पर्य्यमव-गम्यते इत्यभिसन्धाय भावत्वादिपदं भावत्वत्वादिपरतया व्याचष्टे दीधितौ "भावत्वेति" । अप्रसिद्धानुयोगिकाभावस्य दुर्निरूपतया लिङ्गत्वाभावादित्यसम्भवपरतया हेतुं पूरयन् व्याचष्टे "अप्रसिद्धत्वे-नेति" । भावभेदवैशिष्ट्यस्याभावभेदावृत्तितया तद्विशेषणतया लिङ्गतावच्छेदकघटकत्वासम्भवादिति-पर्य्यवसितोऽर्थः ।

ननु मीमांसकैः केवलान्वय्यनुमानानङ्गीकाराद्भावभिन्नपदा-र्थानङ्गीकाराच्च भावभिन्नत्वरूपाभावत्वघटितान्यतरत्वावच्छिन्न-लिङ्गकप्रमेयत्वानुमानोपपादनं विरुद्धमित्यत आह "भावत्वाभाव-त्वेत्यादिकमिति" । "अतिरिक्ताश्चेति" । यद्यप्यभावस्याधिकरणरूप-त्वेऽपि स्वरूपसम्बन्धादिरूपाभावत्वघटितान्यतरस्य हेतुत्वसम्भव-स्तथापि दर्शितसंशये भावभेदस्य कोटितया तदघटितान्यतरस्य हेतुत्वं मूलाभिप्रेतमित्याशयेनेदम् । साध्यस्य केवलान्वयित्व-ज्ञानकाले यत्किञ्चिद्रूपावच्छिन्नस्यैव वृत्तिमतो लिङ्गता सम्भव-

अथ यद्व्यतिरेकज्ञानं यदुत्पत्तिप्रतिबन्धकं तत् तन्निश्चयसाध्यं, तथाच पक्षधर्म्मस्य व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम्, अतो व्याप्याभेदज्ञानं तद्धेतुः सिध्य-

---

"यद्व्यतिरेकेति"।

यत्संशयव्यतिरेकनिश्चयावित्यत्र व्याख्याततत्त्वमेतत्। यद्वा यद्व्यतिरेकनिश्चये कार्य्यानुत्पत्तौ तद्व्यति-

---

तीति मूले तदकथनात् न्यूनताभङ्गायाह "केवलान्वयिन इति"। अयमालोको धूमो वेति-सन्देहे धूमालोकान्यतरत्वस्यानुमापकत्वरूपं लिङ्गत्वमुक्तं वह्नौ साध्ये व्यधिकरणतया न सम्भवतीति साध्यं पूरयति "व्याप्यत्व इति"। वह्न्यादिव्याप्यत्वे साध्य इत्यर्थः। लिङ्गपदस्यात्रैव लिङ्गतावच्छेदकपरत्वे वह्न्यादिसाध्यपरतया मूलसङ्गतिरित्याह "लिङ्गतावच्छेदकस्येति"। ननु यद्धर्म्मिकयद्व्यतिरेकज्ञानप्रतिबध्यं तद्धर्म्मिकतन्निश्चयत्वावच्छिन्नजन्यमित्येतादृश्यां पक्षीयधूमधर्म्मिकसाध्यव्याप्तिनिश्चयत्वेनानुमितिहेतुत्वसाधिकायां मूलोक्तव्याप्तौ ग्राह्यव्यतिरेकनिश्चयप्रतिबध्ये घटज्ञानादौ व्यभिचारज्ञानसामान्यप्रतिबध्ये अव्यभिचारज्ञाने च व्यभिचार इत्याशङ्क्याह "यत्संशयेति"।

"व्याख्याततत्त्वमिति। तच्च तत्त्वं संशयसाधारणव्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वं व्याप्तिघटकम्, ग्राह्यसंशयस्य सर्व्वत्रैवाप्रतिबन्धकत्वोपगमात् अव्यभिचारग्रहेऽपि व्यभिचारनिश्चयत्वेनैव प्रतिबन्धकत्वमिति। अथेत्यादिशङ्काया व्याप्तिपरत्वे स्वयमनुपपत्तेर्व्वक्ष्य-

तीति-चेन्न, धूमत्वपुरष्कारेण व्याप्तिस्मरणपक्षधर्म्मता-ज्ञाने सति विशेषदर्शनान्न-धूमे व्याप्यभेदज्ञानं, किन्त्व-नुमितेरेव तत्रोत्पत्तिः, तत्सामग्रीसत्त्वात्। अतो न व्याप्यभेदज्ञानम् अनुमितिप्रतिबन्धकं येन व्याप्याभेद-ज्ञानं तद्धेतुः स्यात्।

---

रेकनिश्चयाभावस्य कारणतामपेक्ष्य तन्निश्चयस्यैव कार-णत्वं युक्तं लाघवादित्यभिप्रायिकमिदम्। अतएव क्लृप्तनियतपूर्व्वभावतया भेदग्रहाभावएवानुमितिहेतु-रित्यभिप्रेत्य "अस्तु-वेत्यादि" वक्ष्यति।

---

माणतया फलानुत्पत्तिनियतत्वरूपप्रतिबन्धकत्वनिवेशनेन मूले वक्ष्यमाणस्वरूपासिद्धेः परीहारसम्भवेन समाधानासङ्गतेः लाघवेन विशिष्टपरामर्शकारणताव्यवस्थापनपरतया तां व्याचष्टे "यद्वेति"। व्यतिरेकसंशये कार्य्यानुत्पत्त्यनुरोधेन निश्चयत्वेन हेतुतायाः पूर्व्वमाशङ्कितत्वात् पौनरुक्त्याशङ्कायाः परीहाराय मूलस्थव्याप्यभेद-ज्ञानपदस्य निश्चयपरतां स्फुटयितुं व्यतिरेकज्ञानसामान्यमुपेक्ष्य तन्निश्चयकथनम्। कार्य्यानुत्पत्तौ, कार्य्यानुत्पत्तिनियमे। इत्यञ्च मूले 'यदुत्पत्तिप्रतिबन्धकम्' इत्यत्र प्रतिबन्धकत्वं गुरुधर्म्माव-च्छिन्नभेदाग्रहकारणताप्रसञ्जकं कार्य्यानुत्पत्तिनियतत्वरूपमेवेति-बोध्यम्। लाघवात्, अवच्छेदक लाघवात्। संशयसाधारणज्ञानत्वा-वच्छिन्नाभावहेतुत्वेऽप्यप्रामाण्यनिश्चयत्वावच्छिन्नाभावस्य विशेषण-

न च धूमत्वपुरस्कारेण व्याप्तिस्मरणपक्षधर्म्मताज्ञाने इयं धूमव्यक्तिर्वह्निव्याप्या-नेतिभ्राम्यतोऽनुमित्यापत्तिरतो विशिष्टज्ञानं तद्धेतुरिति-वाच्यं, धूमत्वस्य विशेषस्य दर्शनेन तादृशभ्रमानुत्पत्तेः, तत्रानुमितिसद्भावादेव। अन्यथा निश्चयसामग्र्यां सत्यां भ्रमानन्तरं परामर्श एव कुतो न भवति।

---

सामान्यतो विशेषदर्शनात् सामान्यतो भ्रमो न स्यात् विशेषतस्तु-स्यादेवेत्यभिप्रायिकीमाशङ्कां निरस्यति "न चेति"।

---

त्वाङ्गीरवं बोध्यम्, अतएव, उक्तग्रन्थस्य लाघवप्रदर्शनपरत्वादेव। अनुमितिहेतुः, कल्पनालाघवादिति शेषः। "वक्ष्यतीति"। उक्तग्रन्थस्य व्याप्तिपरत्वे भेदग्रहाभावस्य हेतुत्वेऽपि व्याप्तिवलाद्विशिष्टपरामर्शकारणतासिद्धेरावश्यकत्वात् तामनिराकृत्य भेदाग्रहकारणत्वोपगमस्यासङ्गत्यापत्तेरिति भावः। एवञ्च समाधाने 'अनुमितिप्रतिबन्धकमित्यस्य, मयोच्यत इति शेषः। येन, यदपेक्षया लाघवेनेत्यर्थः। विशेषदर्शनादुभ्रमोत्पत्त्यभावस्य प्रागुक्तत्वान्नचेत्याद्याशङ्कानुत्थितेस्तदाशयं प्रकाशयति "सामान्यत इति"।

धूमत्वस्य विशेषस्य दर्शनेनेतिमूलस्य 'उक्तभ्रमे ग्राह्याभावावच्छेदकतया भातस्य धूमत्वस्य धर्म्मितावच्छेदकतया स्फुरणेनेत्यर्थो, दीधित्यनुसारेण बोध्यः। विशेषदर्शने संशयवत् भ्रमस्यापि

| | | |
|---|---|---|
| Nityācārapradīpa Vol. I. Fasc. 1--8; Vol. II, Fasc. 1-4. @ /10/ each ... | 7 | 8 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each ... ... ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. II, Fasc. 1--3 @ /10/ each ... | 1 | 14 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1-2 @ /10/ each ... ... | 1 | 4 |
| Nyayasarah ... ... ... ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1--6 @ 2/ each ... ... ... ... | 10 | 0 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Parāçara Smṛti, Vol. I, Fasc. 2-8; Vol. II, Fasc. 1--6; Vol III, Fasc. 1--6 @ /10/ each ... .. ... ... ... | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... ... | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 ... ... ... ... | 0 | 10 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraicca Kaha Fasc. 1-5, @ /10/ each ... ... ... | 3 | 2 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Six Buddhist Nyaya Tracts. ... ... ... ... .. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... ... | 1 | 0 |
| Suryya Siddhanta Fasc. 1-2 @ 1-4 each ... ... ... | 2 | 8 |
| Syainika Sastra ... ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each .. ... | 9 | 6 |
| *Taitteriya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| Tantra Vārteka (English) Fasc. 1-10 @ 1/4/ each .. ... ... | 12 | 8 |
| *Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc, 1-6; Vol. II, Fc, 1, @ /10/ each | 4 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-5, @ /10/ each ... ... | 3 | 2 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tirthacintamoni, Fasc, 1-3, @ /10/ each ... ... ... | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6; Vol. II, Fasc. 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol. II. Fasc. I @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/ ... ... ... | 5 | 0 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... ... ... | 3 | 12 |
| Yogasāstra Fasc. 1-3 .. ... ... ... ... | 3 | 12 |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarkosha ... ... ... ... ... ... | 2 | 0 |
| Baudhastotrasangraha, Vol. I ... ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... ... | 1 | 0 |
| Pag-Sam S'hi Ṭiṅ, Fasc. 1--4 @ 1/- each ... ... ... ... | 4 | 0 |
| Rtogs *brjod d*pag *h*khri S'iṅ (Tib. & Sans. Avadāna Kalpalatā Vol. I, Fasc. 1--10; Vol. II. Fasc. 1--10 @ 1/- each ... ... | 20 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc 1-6, @ 1/ each | 14 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Āmal-i-Salih, or Shah Jahan Namah ... ... ... ... | 2 | 0 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Āīn-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... ... | 33 | 0 |
| Ditto (English) Vol. II, Fasc. 1-5 Vol. III, Fasc. 1-5, Index to Vol. II, @ 2/- each ... ... ... | 22 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each ... ... ... | 55 | 8 |
| Akbarnāmah, English Vol. I, Fasc. 1--8; Vol. II, Fasc. 1--7, Vol. III, Fasc. 1--2 @ 1/4/ each ... ... ... ... | 21 | 4 |

| | | |
|---|---|---|
| Ditto of Zabardast Khan ... ... ... ... | 1 | 0 |
| Farhang-i-Rashīdī, Fasc. 1–14 @ 1/8/ each ... ... ... | 21 | 0 |
| Fihrist-i-Ṭūsī. or, Ṭūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Gulriz ... ... ... ... ... | 2 | 0 |
| Hadiqatu'L, Haqiqat, (Text & Eng.) ... ... ... ... | 3 | 8 |
| History of Gujarat ... ... ... ... ... | 1 | 0 |
| Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| Hisātory of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... | 7 | 8 |
| Iqālnamah-i-Jahāngirī, Fasc. 1--3 @ /10/ each ... ... ... | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'āṣir-i-Rahīmī, Part I, Fasc. 1--8 @ 2/ each ... ... | 6 | 0 |
| Maa'āṣir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Ditto (Eng) Vol. I, Fasc. 1--2, @ 1/4/ each ... ... | 2 | 8 |
| Memoirs of Tahmasp ... ... ... ... | 1 | 0 |
| Ma:hamu 'L-Ilali 'L-Mu'Dila Fasc. 1--2 ... ... ... | 2 | 0 |
| Muntakhabu-t-Tawārikh, Fasc. 1--15 @ /10/ each ... ... ... | 9 | 6 |
| Ditto (English) Vol. I, Fasc. 1--7; Vol. II, Fasc. 1--5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... | 16 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1--2 @ 1/- each ... ... ... | 1 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... | 0 | 10 |
| Niẓāmī's Khiradnāmah-i-Iskandarī, Fasc. 1--2 @ /12/ each ... ... | 1 | 8 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... ... | 1 | 0 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... | 5 | 0 |
| Riyāzu-s-Salātīn, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1--5 @ 1/ ... ... ... | 5 | 0 |
| Shah Alam Nama ... ... ... ... ... | 1 | 14 |
| Tadhkira-i-khushnavīsān ... ... ... ... | 1 | 0 |
| Tubaquāt-i-Nāṣirī, (English), Fasc. 1-14 @ 1/- each ... | 14 | 0 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāi Aif. Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... ... ... | 3 | 0 |
| The Mabani 'L Lughat: A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Rāmīn, Fasc. 1--5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--8 @ /10/ each ... ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XX @ 10/ each ... ... 20 0
2. Proceedings of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No.
3. Journal of the Assiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10, 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date. (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts 1--III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

BIBLIOTHECA INDICA:

A

# A Collection Of Oriental Works

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1372.

# तत्त्वचिन्तामणि-दीधिति-विवृतिः




# TATTVACINTĀMANI DIDHITI-VIVRITI

OR

## A Sub-commentary on Tattvacintamani.

BY

GADADHARA BHATTACHARYYA

WITH TATTVACINTAMANI AND DIDHITI

EDITED BY

MAHĀMAHOPĀDHYĀYA KAMAKHYANATHA TARKAVAGISA

*Late Professor, Sanskrit College.*

VOLUME. II. FASCULUS. III.


Calcutta,

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,

No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.

1913.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—som of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... | Rs. 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, | | |
| Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitereya Lochana. .. ... ... ... ... | 2 | 0 |
| Amarkosha, Fasc. 1 ... ... ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- ... ... | 1 | 4 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Atmatattaviveka, Fasc. I. ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-10; Vol. II. | | |
| Fasc. 1-10 @ 1/ each ... ... ... ... | 20 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol II, Fasc. 1 @ /10/ each ... ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-5 @ /10/ each ... | 5 | 0 |
| Bhāsavritty ... ... ... ... ... | 0 | 10 |
| Bhātta Dipikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... ... | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Çri Cantinatha Charita, Fasc. 1-3 ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. I-5, Vol. III, | | |
| Fasc. 1-7 Vol. V, Fasc. 1-4 @ /10/ each ... ... ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Ditto Vol. IX. Fasc. 1-2 ... ... ... | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. I-17 @ /10/ each .. ... | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, | | |
| Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... ... ... | 1 | 4 |
| Çlockavartika, (English) Fasc. 1-7 @ 1/4/ each ... ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; | | |
| Vol. III, Fasc. 1-4; Vol 4. Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol. I. @ /10/ each ... | 3 | 2 |
| Ditto Vol. II. Fasc. 1-2 @ 1/4/ each ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... | 4 | 8 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... | 5 | 10 |
| Kiranavali, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Madana Pārijata, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, | | |
| Fasc. 1-10 @ /10/ each ... ... | 19 | 6 |

तत्त्वचिन्तामणिः।

अस्तु वा व्याप्यतया पक्षधर्म्मतया चावगतस्य भेदाग्रह एवानुमितिहेतुः परामर्शहेतुतया तस्यावश्यकत्वात्। अतएवासन्निकृष्टधूमज्ञानादप्यनुमितिः। नचैवं गौरवं, तदा विशिष्टज्ञानानुपस्थितेः। न च जनकज्ञानाविरोधिनोऽज्ञानस्याप्रतिबन्धकत्वात् भेदग्रहो न प्रतिबन्धक इति वाच्यम्। अभेदज्ञानस्याजनकत्वात् त्वयापि लिङ्गपरामर्शे तादृशस्य प्रतिबन्धकत्वस्वीकाराच्च। अथ गोत्वं मधुरत्वावान्तरजातिर्वा लिङ्गं न स्यात् तद्गतधर्म्मान्तरस्याभावात्, अतएव तस्य विलक्षणत्वात् इति चेन्न, व्यक्तेरेव तत्र प्रकारत्वात्, न हि गौर्गोत्वमिति ज्ञानयोरविशेषः, अन्यथा गोत्वमिति ज्ञानस्य निर्व्विकल्पकत्वापत्त्या व्याप्यत्वग्रहे परामर्शे चानुपयोगात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वं गोत्वत्वमित्यनुभवाच्च। न चैवमनवस्था, तदितरावृत्तित्वे सति तद्वृत्तित्वस्यानुभवेनापलापासम्भवात्।

इति परामर्शपूर्व्वपक्षचिन्तामणिः।

---

दीधितिः ।

'अस्तु वेत्यभ्युपगमवादः । 'न चेत्यादि अभेदज्ञानस्याहेतुत्वे भेदग्रहो न प्रतिबन्धकोभवितुमर्हतीत्यर्थः । 'अभेदेति, तथाचातथाभूतस्यापि प्रतिबन्धकत्वमनायत्या वक्तव्यमिति भावः । अतथाभूतत्वस्य सन्दिग्धत्वे व्यभिचारमाह, 'त्वयापीति, विशेषणान्तरदाने चाप्रयोजकत्वमिति भावः । गोत्वे गोपदशक्यतावच्छेदकत्वमविशेषितं विशेषितं वा तदस्तीत्यतः 'मधुरत्वेति, मधुरत्वव्याप्यो धर्म्मो जातिरखण्डोपाधिर्वेति फलतो न विशेषः । गौरितिज्ञाने गोत्वप्रकारकत्वं विशेषमाशङ्क्याह, 'अन्यथेति । व्यक्तेः प्रकारत्वेऽपि लिङ्गतावच्छेदकत्वासम्भवादाह, 'गवेतरेति, गोत्वत्वस्याप्रवेशान्नात्माश्रयः, अत्र च यथा साध्यं गवेतरासमवेतत्वादिकमेवोपादेयं कालादौ व्यभिचारवारणाय समवायेन सम्बन्धेन हेतुत्वस्यावश्यवाच्यत्वेनाभावादिसाधारण्येऽप्यदोषात्, व्यतिरेकेऽपि रूपान्तरेण सम्बन्धान्तरेण च गोत्वाभावस्यापि व्यभिचारितया गवेतरासमवेतस्य तत्त्वेन समवायसम्बन्धेनाभावस्यैव गमकत्वात् ।

इति परामर्शपूर्व्वपक्षदीधितिः ।

गादाधरी विवृतिः ।

न सम्भव इति भेदाग्रहहेतुत्वाभिधानासङ्गतिरत आह, 'अस्तु-वेति। ननु व्याप्य-पक्षधर्म्मयोर्भेदाग्रहस्यानुमितिहेतुत्वे तेषां कारणबाधेनानुमित्यात्मकान्यथाख्यातिनिराकरणं विरुध्यते ह्रद-वृत्तिवाष्पादौ वह्निव्याप्यधूमादेर्भेदाग्रहेण ह्रदादौ वह्न्याद्यनुमि-तेर्दुर्व्वारत्वात्। न च फलासिद्ध्या ह्रदादिपक्षं वह्न्यादिरूप-साध्यञ्चान्तर्भाव्य कारणत्वाकल्पनान्नापत्तिरिति वाच्यम्। पक्षमन-न्तर्भाव्य पक्षनिष्ठप्रत्यासत्त्या कारणत्वकल्पनेनापत्तिसम्भवादिति चेन्न, एतन्मतानिर्भरेणैतद्दोषस्याकिञ्चित्करत्वात् व्याप्यतावच्छेदक-प्रकारकस्यैव पक्षधर्म्मताज्ञानस्य भेदाग्रहहेतुतावच्छेदकत्वोपगमे-नान्यथाख्यातिवारणसम्भवाच्च (१) इतरसकलकारणसत्त्वे यत्सत्त्वे कार्य्यानुत्पादस्तस्यैव प्रतिबन्धकताया आवश्यकत्वादिति भावः। 'न च जनकज्ञानेत्यादिमूलशङ्काया भेदग्रहे नैयायिकानामनुमित्य-प्रतिबन्धकत्वसाधनपरत्वेऽसङ्गतिः जनकज्ञानाप्रतिबन्धकस्यैव हेतु-तायाः स्वीकरणीयत्वात् तस्य च स्वमतेऽसिद्धत्वात् इत्यतस्तस्या-आपत्तिपरत्वं स्फुटीकरोति, 'अभेदज्ञानस्येति, मूले 'अभेदज्ञानस्या-जनकत्वात्' अतीन्द्रियहेतुकानुमितावुक्तक्रमेण व्यभिचारेण जनक-त्वासम्भवात्, तथाच विपर्य्ययानुमाने बाध इति भावः। नन्वेवम-प्युक्तव्याप्तिविरोधाद्भेदग्रहस्य प्रतिबद्धकत्वानुपपत्तिर्दुर्व्वारैवेत्यत-आह, दीधितौ 'तथाचेति, 'अतथाभूतस्यापि' जनकज्ञानाविरोधि-

(१) पक्षमनन्तर्भाव्य पक्षनिष्ठप्रत्यासत्त्या कारणत्वकल्पनेनापत्तिसम्भवादि-त्यभिसन्धायास्तु वेत्यादिकल्पे अनिर्भरमाह, 'अस्तुवेत्यादि, इति पा०।

नोऽपि, भेदग्रहस्येति शेषः, 'अनायत्या वक्तव्यमिति, अन्यथा भेदग्रहदशायां अनुमित्यापत्तेरिति शेषः। तथाच तादृशव्याप्तिरेव बाधितेति भावः। 'सन्दिग्धत्व इति, नैयायिकैरतीन्द्रियादिहेतुकस्थले मानसविशिष्टज्ञानोपगमेन व्यभिचारानिर्णयादिति भावः। ननु लिङ्गपरामर्शे भेदग्रहस्य जनकज्ञानाविरोधिनः प्रतिबन्धकत्वेऽपि न व्यभिचारः ग्राह्याभावानवगाहित्वविशिष्टस्य जनकज्ञानाविरोधित्वस्याप्रतिबन्धकत्वव्याप्यत्वोपगमात् इत्यत आह, 'विशेषणान्तरदाने चेति। ननु गोपदवाच्यत्वे साध्ये गोपदशक्यतावच्छेदकत्वस्य लिङ्गतावच्छेदकत्वसम्भवेऽपि सास्नादिसाध्यकस्थले न तथात्वसम्भवः गोपदस्य नानार्थतया अन्यत्रापि तत्शक्यतावच्छेदकसत्त्वात् इत्यत आह,'विशेषितं वेति सास्नादिमद्वृत्तित्वादिविशेषितं वेत्यर्थः, वाकारो व्यवस्थितविकल्पे। ननु गुणगतजातिमनङ्गीकुर्व्वतां मधुरत्वव्याप्यरसगतजातेरभावात्तल्लिङ्गतानुपपत्तेः इत्यत आह, 'मधुरत्वेति, 'फलत इति, तादृशधर्म्मस्य क्षीररसत्वाद्यनुमापकतायाः सर्व्वसम्मतत्वादिति भावः। 'गोत्वप्रकारकत्वं विशेषमिति, गोत्वमिति ज्ञाने तदभावादिति भावः। मूले 'अन्यथेति गोत्वमिति ज्ञाने व्यक्तेरप्रकारत्वे, 'अनुपयोगात्' उपयोगानुपपत्तेः, अवच्छेदकप्रकारकज्ञानविधयैव तस्यावच्छेद्यव्याप्तिग्रहे सम्बन्धितावच्छेदकप्रकारकज्ञानविधया व्याप्तिस्मारकत्वेनैव च तस्य परामर्शे उपयोगादिति भावः। दीधितौ 'लिङ्गतावच्छेदकत्वासम्भवादित्यस्य गोपदप्रवृत्तिनिमित्तत्वादिसाध्यके तादात्म्येन गोत्वादिहेतावित्यादिः, आधेयतया गोविशिष्टस्य गवाधेयत्वविशिष्टस्य च

द्रव्यत्वादेरपि गोमात्रवृत्तितया सास्नादिसाध्यकस्थले व्यक्तेर्लिङ्ग-तावच्छेदकत्वं सम्भवत्येव इत्यवगन्तव्यम् । ननु उक्तगोत्वत्वशरीरेऽपि भेदप्रतियोगितावच्छेदकमुद्रया गोत्वस्यानतिप्रसक्तगोत्वत्वेनैव निवे-शनीयतया आत्माश्रयः इत्यत आह, 'गोत्वत्वस्येति, 'अप्रवेशादिति स्वरूपत एव तत्प्रवेशसम्भवादिति भावः । मूले 'न चैवमिति स्वतो-व्यावृत्ते गोत्वादावपि धर्म्मान्तरस्वीकारे, 'अनवस्था' अविश्रान्त-धर्म्मधाराप्रसङ्गः । प्रामाणिकत्वादनवस्था न दोषायेति समाधत्ते, 'तदितरेति । सास्नादौ साध्ये गोत्वत्वघटकसकलगोसमवेतत्वांशस्य वैयर्थ्यात् तत्र तं परित्यजति दीधितौ 'अभावेति, 'अत्र' एतद्घटकं, 'यथासाध्यमिति सास्नादौ साध्ये गवेतरासमवेतत्वं विशेषणीभूतं गोसमवेतत्वञ्च (१), सास्नाव्यापकजातित्वादौ साध्ये तादात्म्येन हेतुतायां सकलगोसमवेतत्वं केवलं व्याप्यतावच्छेदकं वाच्यं न तु विशिष्टं, विशिष्टन्तु (२) गोपदप्रवृत्तिनिमित्तत्वादिसाध्यके तादात्म्येन गोत्वे हेतावित्यर्थः । ननु गवेतरासमवेतत्वस्या-भाव-मेयत्वादावपि सत्त्वात् सास्नादिव्यभिचारितया सास्नादि-साध्यकएव कथं तद्व्याप्यतावच्छेदकं इत्यत आह, 'कालादाविति सम्बन्धसामान्येन हेतुत्वे सकलगोसमवेतत्वांशनिवेशेऽपि गोत्ववति सास्नादिशून्ये कालादौ व्यभिचारस्यावश्यकतया समवायेन हेतु-त्वस्यावश्यं स्वीकरणीयत्वात् गवेतरासमवेतत्वस्याभावादिसाधा-

---

(१) गोसमवेतत्वस्य सास्नाव्याप्यत्वादितिभावः ।

(२) गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपमित्यर्थः ।

रणस्यापि समवायेन व्यभिचरितायामनवच्छेदकत्वादित्यर्थः (१)। एतच्च साध्याभाववदवृत्तित्वमेव व्याप्तिरित्यभिप्रायेण। यदि च हेतुतावच्छेदकसम्बन्धेनावृत्तिव्यावृत्तं तेन सम्बन्धेन वृत्तिमत्त्वमपि तत्र निवेश्यते तदा अवच्छेदकस्यानतिप्रसक्तत्वनियमेन गवेतरासमवेतत्वमात्रस्य समवायसम्बन्धेन वृत्तिमत्त्वमात्रघटितव्याप्तेरतिप्रसक्ततयानवच्छेदकत्वात् समवेतत्वांशोऽपि तद्विशेष्यविधया हेतुतावच्छेदककोटौ निवेश्य इति ध्येयम्। सास्नाभावसाध्यकगोत्वाभावादिहेतुकस्थलेऽपि समवायसम्बन्धावच्छिन्नगवेतरासमवेतत्वावच्छिन्नप्रतियोगिताकाभावत्वमेव व्याप्यतावच्छेदकं न तु सकलगोसमवेतत्वमपि हेतुभूताभावप्रतियोगितावच्छेदके निवेश्यं वैयर्थ्यात् (२)। न च गवेतरासमवेतत्वस्य प्रतियोगितावच्छेदकतया निवेशे तद्वैयर्थ्येऽपि प्रतियोगित्वसमानाधिकरणतया निवेशे न तथात्वं गवेतरासमवेतत्द्रूपाद्यभावस्य गोसाधारणत्वेन व्यभिचारित्वादिति शङ्क्यं, सकलगोसमवेतगोत्वस्यापि द्वित्वादिनाऽभावस्य गोसाधारणत्वात् सकलगोसमवेतत्वनिवेशेऽपि तादृशरूपावच्छिन्नाभावस्यैव हेतुताया वाच्यतया तदंशवैयर्थ्यस्य दुर्वारत्वात् विशिष्टस्य गौरवेणाभावप्रतियोगितायामप्यनवच्छेदकतया तदवच्छिन्नाभावाप्रसिद्धेश्चेत्यतआह, 'व्यतिरेकेऽपीति, सम्ब-

(१) समवायेनाव्यभिचारितायामवच्छेदकत्वादित्यर्थ इति पा०।

(२) तदा अवच्छेदकस्यानतिप्रसक्तत्वनियमेन गवेतरासमवेतत्वे सति समवेतत्वमेव सास्नादिव्याप्यतावच्छेदकं वाच्यं गोत्वाभावे सास्नाभावादिसाध्यकेऽपि प्रतियोगिविशेषणतया गवेतरासमवेतत्वस्यैव निवेशो न तु सकलगोसमवेतत्वस्यापि वैयर्थ्यात् इति पा०।

न्धान्तरेण गोत्वाभावस्य व्यभिचारितया 'समवायेति दृष्टान्त-विधयोक्तम् ।

यत्तु गवेतरासमवेतस्य मेयत्वादेः केवलान्वयितया सम्बन्ध-सामान्येन तत्त्वावच्छिन्नाभावाप्रसिद्धिरतः समवेतत्वं निवेश्यमेवे-त्याशङ्कानिराकरणाय 'तदिति, तत्तुच्छं, सम्बन्धसामान्येन गवेतरा-समवेतसमवेताभावस्याव्यभिचारितयोक्तग्रन्थस्य यत्किञ्चित्सम्बन्धा-वच्छिन्नाभावहेतुतायामेव व्यभिचारप्रदर्शनपरतया तद्धेतुतायाञ्चा-प्रसिद्धिविरहेण तामादाय समवेतत्वांशसार्थक्यशङ्कानवतारेण तत्र व्यभिचारप्रदर्शनस्यानौचित्येनासङ्गतेः, 'सम्बन्धान्तरेण' सम्बन्ध-सामान्येन, 'गोत्वाभावस्यापि व्यभिचारितया' कालादेः पक्षत्वे स्वरूपासिद्धतयेति व्याख्यायामुदन्तरत्वात् ।

इति परामर्शपूर्व्वपक्षविवृतिः समाप्ता ।

---

## अथ परामर्शसिद्धान्तः ।

### तत्त्वचिन्तामणिः ।

अत्रोच्यते, अयमालोको धूमोवा उभयथापि वह्नि-व्याप्य इति ज्ञानं ततोऽनुमितिः । न च धूमत्वेना-लोकत्वेन वा तव निश्चयः । अथ तदन्यान्यत्वमेव तत्र लिङ्गम् । न च तदज्ञानदशायामनुमितिदर्शनात् न तथेति वाच्यम् । धूमालोकान्यान्यत्वज्ञानं विना तवापि

तत्र व्याप्यत्वानिश्चयेन तदर्थं तद्बोधावश्यकत्वादिति चेन्न, न हि धूमालोकान्यान्यत्वं धूमान्यान्यत्वं वा व्याप्यतावच्छेदकं गौरवात् व्यभिचारावारकविशेषण-वत्त्वाच्च किन्तु धूमत्वादिकं तच्च तत्र सन्दिग्धमेव। ननु तदन्यान्यवह्निव्याप्यमेव व्यभिचाराभावेन व्याप्ति-विरहसाधनस्य बाधितत्वात् पुरुषस्तु तत्र नीलधूम-वत्त्वादित्यत्रैवाधिकेन निगृह्यते न तु व्याप्यत्वासिद्धेरिति चेन्न, तदन्यान्यद्धूमालोकस्वरूपमेव तच्च व्याप्यमिति सत्यं, न च वस्तुगत्या व्याप्यज्ञानादनुमिमितिः, अति-प्रसङ्गात् किन्तु व्याप्यतावच्छेदकप्रकारकज्ञानात्। न च तदन्यान्यत्त्वं वह्निव्याप्यतावच्छेदकमित्युक्तम्।

---

परामर्शसिद्धान्तदीधितिः।

'लिङ्गं' लिङ्गतावच्छेदकं, तथाच न व्यभिचारः,'न तथा' न तेन व्यभिचारवारणम्। 'न हीति, 'धूमान्या-न्यत्वमिति दृष्टान्तार्थम्। न चैकधर्म्मस्यावच्छेदकत्वा-पेक्षया धर्म्मद्वयस्य तत्त्व एव गौरवमिति वाच्यम्। तादृशैकधर्म्मघटकानेकभेदादिघटकतया धर्म्मद्वयस्यैव प्रथमोपस्थितत्वेन चावच्छेदकत्वौचित्यात्। अन्यथा

वह्न्यादीनामपि व्याप्यतया तावदन्यतमत्वस्यैवावच्छेदकत्वं स्यात् ।

---

अथ परामर्शसिद्धान्तविवृतिः ।

मूले 'अयमिति पर्व्वतवृत्तिरित्यर्थः', 'आलोको धूमो वेति', स्वरूपतो धूमत्वालोकत्वयोरत्र कोटिता न तु धूमत्वत्वालोकत्वत्वावच्छिन्नयोः, तथा सत्युक्तसंशयस्य स्वरूपतो धूमत्वादिप्रकारेण पक्षधर्म्मतानिश्चयाविरोधितया असङ्गतेः । न च संशयस्य भावद्वयमात्रकोटिकस्यानभ्युपगमे धूमत्वाभावालोकत्वाभावयोरत्र कोटितायाः स्वीकरणीयत्वात् तत्प्रतियोगितावच्छेदकधूमत्वत्वादेरपि भानमावश्यकं इति वाच्यम् । धूमत्वाद्यभावस्येव धूमादिभेदस्यापि कोटितया धूमत्वादिसंशयनिर्व्वाहात् धूमादिभेदज्ञाने च धूमत्वत्वादिभानानावश्यकत्वात् । न च धूमत्वादौ धूमादिभेदविरोधभाने तद्धर्म्मितावच्छेदकतया धूमत्वत्वादिभानमावश्यकमिति धूमत्व-धूमादिभेदकोटिकसंशयेऽपि धूमत्वत्वादिनैव धूमत्वादेः कोटित्वमावश्यकं संशये कोटिविषयताया विरोधग्रहप्रकारावच्छिन्नत्वनियमादिति वाच्यम् । संशयस्थले कोट्योः परस्परविरोधभानानियमात् धूमभेदादौ धूमाद्यवृत्तित्वरूपधूमत्वादिविरोधभानेन स्वरूपतो धूमत्वादिकोटिकसंशयनिर्व्वाहात्, स्वरूपतो भासमानधूमत्वाद्यवच्छेदेन धूमादिभेदाभावज्ञानस्यापि धूमत्वादौ धूमादिभेदविरोधज्ञानतया तादृशविरोधज्ञानेऽपि धूमत्वत्वादिभानानियमाच्च । अथैवमपि पर्व्वतवृत्तित्वविशिष्टे

धूमत्वादिसन्देहः पर्व्वतवृत्तित्वविशिष्टे धूमत्वादिनिश्चयस्यैव विरोधी न त्वनुमितिजनकतया अभिमतस्य धूमत्वादिविशिष्टे पर्व्वतवृत्तित्वनिश्चयस्यासमानधर्म्मितावच्छेदकत्वात् ग्राह्याभावानवगाहित्वाच्चेति न तादृशसंशयदशायामनुमित्यनुपपत्तिः, एवं न्यायमतसिद्धपरामर्शनिर्व्वाहाय 'उभयथापि वह्निव्याप्य इति इदम्पदार्थे व्याप्तिनिश्चयाभिधानमसङ्गतं पक्षवृत्तित्वविशिष्टे व्याप्तिनिश्चयस्यानुमितिहेतुत्वे व्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य व्याप्तिप्रकारकज्ञानरूपकरणव्यापारस्य उपसंहारग्रन्थेऽनुमितिहेतुत्वाभिधानविरोधादिति चेन्न, पक्षवृत्तित्वावच्छिन्ने धूमत्वादिरूपविशेषणसन्देहे पक्षे धूमत्वादिविशिष्टकोटिकसंशयस्यौचित्यावर्जिततया पक्षे व्याप्यतावच्छेदकविशिष्टप्रकारकनिश्चयो न सम्भवति पक्षविशेष्यकनिश्चय एव पक्षविशेष्यिकायामनुमितौ हेतुरित्याशयेन धूमत्वादिसंशयाभिधानस्य पक्षवृत्तित्वावच्छिन्ने व्याप्यत्वाभावावगाहिविशेषणसन्देहे च पक्षे व्याप्तिविशिष्टकोटिकसंशयस्यैवौचित्यावर्ज्जिततया पक्षविशेष्यकव्याप्तिविशिष्टप्रकारकानुमितिहेतुनिश्चयासम्भवेन तादृशविशेषणसंशयविरोधिपक्षवृत्तित्वविशिष्टविशेष्यकव्याप्तिनिश्चयाभिधानस्य च सङ्गतिः। वस्तुतः पक्षवृत्तिर्धूमो न वेति संशयस्य पक्षवृत्तिर्धूम इति निश्चय इव धूमत्वविशिष्टधर्म्मिकपक्षवृत्तितानिश्चयेऽपि विरोधित्वं दुरपह्नवं धूमत्वावच्छेदेन पक्षावृत्तित्वस्य पक्षवृत्तित्वावच्छेदेन धूमभेदनिर्व्वाह्यतया तदवच्छेदेन धूमभेदसंशयाद्धूमत्वावच्छेदेन पक्षावृत्तित्वसंशयस्यौचित्यावर्ज्जितत्वात्। एवं पक्षवृत्तित्वविशिष्टे व्याप्यत्वनिश्चयो

व्याप्तिविशिष्टे पक्षवृत्तित्वनिश्चये व्याप्तिविशिष्टे पक्षवृत्तित्वसंशायकपक्षवृत्तित्वावच्छिन्नधर्म्मिकव्याप्त्यभावसंशयविरोधितयोपयुज्यते इति पक्षवृत्तिधर्म्मिकधूमत्वादिसंशय व्याप्तिनिश्चयाभिधानसङ्गतिः ।

केचित्तु व्याप्तिसम्बन्धेन वह्निसाध्यकपुरोवर्त्तिधूमादिपक्षकस्थले तादात्म्यसम्बन्धेन धूमादेर्हेतुत्वे तादात्म्यसम्बन्धेन धूमत्वादिरूपव्याप्यतावच्छेदकावच्छिन्नस्य यत्र पक्षे संशयस्तत्र व्याप्यत्वेन धूमादेः पक्षे तादात्म्यसम्बन्धेन निश्चयादनुमित्युत्पत्त्या व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मतानिश्चयस्य व्यभिचारप्रदर्शनपरतया एतन्मूलं उक्तानुपपत्तिशङ्काव्याकुलचेतसो वर्णयन्ति ते पुनः प्रसिद्धस्थले पर्व्वते धूमत्वाद्यवच्छिन्नवत्तासंशयस्थलीयव्याप्तिविशिष्टवत्तानिश्चयजन्यानुमितौ व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मतानिश्चयव्यभिचारोपेक्षावीजं सम्यगपश्यन्तः कथं निर्वृतिभाजो भवन्तीति चिन्त्यम् ।

मूले 'उभयथापि वह्निव्याप्य इति निश्चयकथनं स्वमते हेतुरक्षणाय, अत्र वह्नेः साध्यस्योपादानाद्धूमालोकान्यतरत्वं लिङ्गमित्यत्र लिङ्गपदस्य यथाश्रुतार्थकत्वानुपपत्तेस्तद्व्याचष्टे, 'लिङ्गमिति, व्यभिचारवारणस्याप्रक्रान्तत्वे 'न तथेत्यत्र 'तथापदस्य वक्ष्यमाणतदर्थकत्वानुपपत्तेः पूरयति, 'तथाच न व्यभिचार इति, 'न तथेत्यस्य न लिङ्गतावच्छेदकमिति नार्थो युज्यते धूमत्वादेरज्ञाने आलोकत्वाद्यवच्छिन्नेनानुमितावपि तस्य लिङ्गतावच्छेदकताया इव तदन्यान्यत्वस्य लिङ्गतावच्छेदकत्वसम्भवेन हेत्वसङ्गतेः अतो व्याचष्टे, 'न तेनेति, 'तेन' तस्य लिङ्गतावच्छेदकत्वेन, प्रकृते धूमत्वस्येव धूमान्यान्यत्वस्यापि सन्दिग्धतया तस्य व्याप्यतावच्छे-

दकत्वखण्डनमनुपयुक्तमित्यत आह, 'धूमान्यान्यत्वमितीति, 'एक-धर्म्मस्य' अन्यतरत्वरूपस्य, 'धर्म्मद्वयस्य' धूमत्वालोकत्वरूपस्य, 'तत्त्वे' व्याप्यतावच्छेदकत्वे, तथाच गौरवस्य व्याप्यतावच्छेदकताबाधकत्वे वैपरीत्यमेव स्यादिति भावः। एकस्यातिगुरुशरीरत्वेन लघुशरीरावच्छेदकयोर्द्वित्वमबाधकमित्याशयेनाह, 'तादृशैकेति, 'धर्म्मद्वयस्यैवावच्छेदकतौचित्यादित्यन्वयः। शरीरलाघवमुक्त्वा उपस्थितिलाघवमप्याह, 'प्रथमोपस्थितत्वेन चेति, 'तावदन्यतमत्वस्य' वह्निधूमालोकान्यतमस्य, 'अवच्छेदकत्वं स्यात्' न तु धूमालोकान्यतरत्वस्य, तथाच कुतो वैपरीत्यापादनमिति भावः। अन्यतरत्वाश्रये व्याप्तिरेव नास्ति अतएव तेन रूपेण हेतुप्रयोगे व्याप्यसिद्ध्यादिना वादिनो निग्रह इत्येवान्यतरत्वस्य व्याप्यतानवच्छेदकत्वे वीजं तदाश्रयस्य व्याप्यत्वे तस्यावच्छेदकताया आवश्यकत्वादित्यभिप्रायोऽन्यतरत्वस्य व्याप्यतावच्छेदकतानिराकर्त्तुरिति भ्रमेण शङ्कते, मूले 'न त्विति, भ्रमं निराकरोति, 'तदन्यान्यदिति। न च तदन्यान्यत्वं वह्निव्याप्यतावच्छेदकं इत्युक्तमिति, अन्यतरनिष्ठयोर्विभिन्नव्याप्त्योर्धूमत्वालोकत्वाभ्यामेवावच्छेदात् प्रत्येकानवच्छेद्यान्यतरत्वावच्छेद्यतया साधारणातिरिक्तव्याप्तेस्त्वानभ्युपगमात् इति भावः।

---

तत्त्वचिन्तामणिः।

न चैवं तदन्यान्यत्वाद्वह्निव्याप्यत्वमपि तत्र नानुमेयं व्यर्थविशेषणत्वादिति वाच्यम्। प्रत्यक्षं हि तद-

न्यान्यत्वविशेषदर्शनाद्व्याप्यत्वज्ञानं जनयति, विशेषणज्ञान-विशेषण--विशेष्यसम्बन्ध-विशेषण--विशेष्येन्द्रियसन्निकर्ष-तदसंसर्गाग्रहविशेषदर्शनानां सत्त्वेन वह्निव्याप्यत्वप्रत्यक्षसत्त्वात् । नचैवं न प्रत्यक्षेऽपि तदन्यान्यत्वज्ञानं सहकारीति वाच्यम् । अन्वय-व्यतिरेकाभ्यां गुरोरपि तस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात् तस्मात्तदन्यान्यत्वज्ञानं तत्र व्याप्यताज्ञानोपक्षीणं न तु साक्षादनुमितिहेतुरिति ।

दीधितिः ।

'अन्वयेति, विशेषदर्शनं हि विपरीतज्ञानविरोधितया प्रत्यक्ष उपयुज्यते तत्त्वञ्चान्यतरत्वदर्शनस्यापि व्यावर्त्तकधर्म्मदर्शनत्वेनाक्षतम्, अत्र च तदन्यान्यत्वस्यातिरिक्तत्वे धूमत्वत्वादेस्तदवृत्तित्वात् धूमत्वादिरूपत्वेपि च धूमत्वत्वादेरप्रवेशाल्लिङ्गत्वेऽपि न वैयर्थ्यमित्यपि द्रष्टव्यम् । एवञ्चान्यतरत्वस्य व्याप्त्यनवच्छेदकत्वे स्थिते तदवच्छेदेन तद्ग्रहोपगमे तवाप्यन्यथाख्यातिस्वीकारप्रसङ्गः ।

गादाधरी विवृतिः ।

व्यर्थविशेषणघटितधर्म्मस्य व्याप्यतानवच्छेदकत्वे धूमालोक-

भिन्नभेदवत् तत्त्वमपि न व्याप्यतावच्छेदकं तथाच व्याप्तेरवच्छिन्नत्वनियमात् तादृशभेदे वह्निव्याप्तिनिरूपिता व्याप्तिरेव न सम्भवतीति तेन वह्निव्याप्यत्वमपि नानुमातुं शक्यते वह्निव्याप्तिव्याप्यत्वेन पक्षधर्म्मतानिश्चयस्याप्ययोगात् इति भवन्मते वह्निव्याप्तिप्रकारकपक्षधर्म्मतानिश्चयोऽपि तत्र दुर्घट इत्याशङ्कते, 'न चैवमिति ।

ननु विशेषदर्शनसहकृतं प्रत्यक्षं तत्र व्याप्तिनिश्चायकं इत्ययुक्तं तदन्यान्यत्वस्याप्यव्याप्यतया तज्ज्ञानस्य विशेषदर्शनत्वासम्भवादिति पुनः शङ्कते, 'न चैवमिति, 'विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वादिति समाधौ 'विशेषदर्शनत्वेनेत्यस्य व्याप्यदर्शनत्वेनेत्यर्थकतोक्तक्रमेण न सम्भवतीति व्याप्यदर्शनसाधारणविपरीतज्ञानविरोधित्वेनेत्यर्थकतां तस्याह, दीधितौ 'विशेषदर्शनमिति, 'व्यावर्त्तकधर्म्मदर्शनत्वेनेति ग्राह्यविरोधिधर्म्मदर्शनत्वेनेत्यर्थः । स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितमेव न व्याप्यतावच्छेदकमित्याशयेनान्यतरत्वस्य व्याप्तिव्याप्यतावच्छेदकत्वं स्वयं व्यवस्थापयति, 'अत्र चेति, अन्यतरत्वस्य धूमत्वादिरूपत्वे तत्त्वस्यानवच्छेदकत्वेऽपि धूमत्वत्वादिना व्याप्यतया व्याप्तिप्रकारकपक्षधर्म्मताधीहेतुतावादिनां व्याप्त्यनुमानं निराबाधमित्यपि बोध्यम् । अन्यतरत्वस्य व्याप्त्यनवच्छेदकत्वेऽपि तदवच्छेदेन तद्भ्रमादनुमितिर्भविष्यतीति शङ्कां निराकुरुते, 'एवञ्चेति । ननु गौरवमात्रं न व्याप्त्यवच्छेदकत्वे बाधकं तथा सति सास्नादिना गवादेर्हेतुताविलयप्रसङ्गः किन्तु व्यर्थविशेषणघटितत्वमेव धूम-

त्वादेश्च प्रत्येकमुभयासंग्राहकत्वात् उभयसंग्रहप्रयोजकस्य धर्म्मस्य न वैयर्थ्यम्। वस्तुतस्तु अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहि-ज्ञानमेव कारणं अतएवानुमितिजनकतया तन्मतसिद्धज्ञानद्वय-काले धूमत्वदर्शनस्यावच्छेदकदर्शनतया अयं धूमो वह्निव्या-प्योन वेति शङ्काविरोधित्वमप्युपपद्यते गुरोरपि च तादृशावच्छे-दकत्वमक्षतमवेति।

---

तत्त्वचिन्तामणिः।

किञ्च वह्निव्याप्यवानयमिति शाब्दज्ञाने व्याप्यत्व-ज्ञानं कारणमित्यन्यत्रापि तथा। अथ वह्निव्याप्य-त्वमपि वह्निव्याप्यतावच्छेदकं तथाहि वह्निनिरूपिता धूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादि-वृत्तिव्याप्त्यवच्छेदिका आश्रयभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेन्न, सकलधूमादिवृत्तिव्याप्तौ माना-भावात् यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्त्याश्रयत्वस्यैव-विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना तद्बोधा-भावात्।

---

दीधितिः।

अस्तु वा गुरुरपि धर्म्मोऽवच्छेदकस्तथापि शुद्धव्या-

प्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह, 'किञ्चेति, 'वह्नीत्यादि, व्याप्तेर्व्याप्यानवच्छेदकत्वादिति भावः। 'मानाभावादिति, वस्तुतो विशेषव्याप्यव-च्छिन्ना सत्ताव्याप्तिरतिरिच्यतां किं तेन, न हि वस्तुतो व्याप्यावच्छेदकप्रकारकं पक्षधर्म्मताज्ञानं हेतुरतिप्रस-ङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम्। न च तदानीं व्याप्यावच्छेदेन व्याप्तिर्गृह्यते, न च तदग्रहेऽनुमितिरपलपनीया, मानाभावात् कल्पत्वा-विशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्व्ववर्त्तितायाः कल्पयितुं युक्तत्वात्।

---

गादाधरी विवृतिः।

अयमालोको धूमो वेत्यादिसन्देहदशायां नानुमित्यनुप-पत्तिरित्याशङ्कायाः प्रथमकल्पे सत्त्वात् तदेव 'किञ्चेत्यादि-दूषणान्तरानुसरणे वीजमिति सूचयितुं प्रथमदोषाभावाभ्युपगमं प्रकाशयन् 'किञ्चेत्यादेर्व्याप्यतावच्छेदकप्रकारकज्ञानहेतुत्वासम्भ-वपरतां स्फुटयति, 'अस्तु वेत्यादिना, एवञ्च मूले 'व्याप्यत्वज्ञान-मित्यस्यावधारणपरतया व्याप्तिप्रकारकपक्षधर्म्मताज्ञानमेवेत्यर्थः, 'कारणं' फलोधायकं, तथाच व्याप्यतावच्छेदकप्रकारकज्ञानव्य-वच्छेदात् तद्धेतुतायां व्यभिचार इत्यर्थो लभ्यते व्याप्तेर्व्याप्य-वच्छेदकत्वोपगमेनैतद्दोषस्य प्राक् समाहितत्वात् तस्यास्तथात्व-

मनिराकृत्य प्रथमत एव तद्दोषदानमयुक्तं इत्यत आशयं पूरयति, 'व्याप्तेरिति, आत्माश्रयेणेत्यादिः, एतच्च स्वरूपसम्बन्धरूपावच्छेदत्वाभिप्रायेण, तदभिप्रायेणैव सामान्य-विशेषव्याप्त्योर्भेदं व्यवस्थाप्य 'अथेत्यादिमूले तयोरवच्छेद्यावच्छेदकभावशङ्का, मूले 'सकलधूमादिवृत्तिव्याप्तौ मानाभावादिति, विशेषव्याप्तीनां धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादीनां अनुगमकस्य व्याप्तित्वस्य दुर्निर्व्वचतया तासां व्याप्त्यन्तरावच्छेदकत्वासम्भवादिति भावः। ननु व्यभिचारधीविरोधित्वमेव सकलविशेषव्याप्तीनामनुगमकं व्याप्तित्वं वह्निव्याप्यवानयमित्यादिशब्देनापि तादृशव्याप्तित्वेन व्याप्तयः पक्षधर्म्मांशे प्रकारतया प्रत्याय्यन्ते, एवं साध्याभाववदवृत्तित्वमपि स्वविशिष्टव्यापकताघटितव्याप्तेरवच्छेदकमिति तेन रूपेण यत्र शब्दाद्व्याप्त्यवगतिस्तत्राप्यनुमितिरुपपद्यत एव, एवं अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य स्वसाधारणतया तदनुसरणे न काचिदप्यनुपपत्तिरित्याशङ्क्य व्याप्तेर्व्याप्यतावच्छेदकत्वमभ्युपेत्यापि शाब्दपरामर्शजानुमितौ व्यभिचारमुपपादयति, 'वस्तुत इति,'अतिरिच्यतामित्यस्य स्वसाधारणमनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं माश्रीयतामिति शेषः(१)। 'अतिप्रसङ्गात्' धूमत्वावच्छेदेन व्याप्तिज्ञानरहितस्यापि धूमवानयमिति ज्ञानादनुमितिप्रसङ्गात्। 'गृह्यते' तत्कालीनग्रहविषयः, 'न च तदानीमिति यदा वह्निव्याप्यवानयमिति शब्दः श्रुयते इत्यर्थः, 'गृह्यत इत्यस्य पक्षधर्म्मता-

(१) मानुस्त्रियतामिति शेष इति पा०।

ग्रहकाले व्याप्तौ व्याप्यतावच्छेदकत्वग्राहकशब्दाभावादिति शेषः। 'अनुमितिरपलपनीयेति अनुमित्यभावः कल्पनीय इत्यर्थः, 'माना-भावात्' तत्कल्पकाभावात्, उक्तरूपेण कारणताया अप्रसिद्ध्या कारणाभावासिद्धेरिति भावः। ननु तत्रापि स्मरणादिरूपताद्दश-व्याप्तिज्ञानसम्भवात् न व्यभिचारनिश्चय इत्यत आह, 'कल्पत्वेति, 'लघुरूपं' व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वं, अयञ्च 'अपि चेत्यादि-मूलस्यैवार्थः, इति तत्कल्प एव निर्भरो दर्शितः।

---

दीधितिः।

एतेन व्याप्तिग्रहविषयधर्म्मिमात्रवृत्तिधर्म्मप्रकारकं पक्षधर्म्मताज्ञानं हेतुरित्यपास्तम्। सामान्यलक्षणान-ङ्गीकारे धूमत्वादेरपि तथात्वायोगात् वह्निव्याप्यं सर्व्वं प्रमेयं धूमवान् पर्व्वत इति ज्ञानादप्यनुमितिप्रसङ्गाच्च। व्याप्तिसमानाधिकरणत्वेन ताद्दशधर्म्मभानोक्तौ च सा धूमव्यक्तिर्वह्निव्याप्येति ज्ञानसहितादुक्तज्ञानात्तत्प्रसङ्गो वह्निव्याप्यवानिति शाब्दज्ञानासंग्रहः।

---

गादाधरी विवृतिः।

'एतेन' कारणीभूतसकलपक्षधर्म्मताज्ञानासंग्राहकत्वेनातिप्र-सक्तत्वेन च, 'व्याप्तिग्रहेति, एताद्दशस्य धर्म्मो व्याप्यतावच्छेदक-धूमत्वादिरिव व्याप्तिरपीति न शाब्दपरामर्शसंग्रह इति भावः। धूमोवह्निव्याप्य इति निश्चयसहितात् द्रव्यवानितिज्ञानादनुमिति-

वारणाय 'मात्रेति। प्रमेयसामान्यहेतुकवाच्यत्वाद्यनुमितिस्वीकारे स्वव्यापकतद्ग्रहविषयताकत्वमेव तद्विषयमात्रवृत्तित्वं, केवलान्वय्यनुमानानभ्युपगमे तु तद्विषयान्यावृत्तित्वमेव, यादृशरूपेण व्याप्तिग्रहविषयतानियतत्वं तादृशनिष्ठावच्छेदकत्वान्यावच्छेदकत्वानिरूपकत्वं प्रकारतायां निवेश्यं अतो न धूमो वह्निव्याप्य इति ज्ञानदशायां जातित्वादिना धूमत्वादिप्रकारकज्ञानान्नातिप्रसङ्गः। स्वरूपतोधूमत्वादिप्रकारकज्ञानसंग्रहाय तादृशरूपावच्छिन्नत्वमुपेक्षितं, 'तथात्वायोगात्' वह्न्यादिव्याप्तिग्रहविषयमात्रवृत्तित्वासम्भवात्, सामान्यप्रत्यासत्तिं विना सकलधूमादीनां व्याप्तिग्रहे भानासम्भवादिति भावः। 'आदिपदेन सकलधूमादिवृत्तिव्याप्तेरपि परिग्रहः, एतावता धूमत्वादिप्रकारकस्य व्याप्तिप्रकारकस्य च पक्षधर्म्मताग्रहस्यासंग्रहो दर्शितः। अतिप्रसङ्गं दर्शयति, 'वह्निव्याप्यमिति, धूमत्वे व्याप्तिग्रहविषयतानियतत्वनिर्व्वाहकस्य व्याप्तिग्रहे सकलवह्निव्याप्यविषयकत्वस्य लाभाय 'सर्व्वमिति, एतच्च ज्ञानं अनुमित्यादिरूपं, सामान्यप्रत्यासत्तिमनङ्गीकुर्व्वतां तेषां प्रत्यक्षे सकलवह्निव्याप्यभानासम्भवात्। सामान्यप्रत्यासत्त्यभ्युपगमपक्षे वा दूषणमिदं, अन्यथाख्यातिमनङ्गीकुर्व्वतां सर्व्वस्मिन् वह्निव्याप्तिविषयकज्ञानासम्भवात्। अन्यथाख्यातिस्वीकारे च तादृशान्यथाख्यातिकाले धूमवान् पर्व्वत इत्यादिज्ञानादनुमितेरिष्टत्वात्। वह्निव्याप्यत्वस्य स्वसमनियतसर्व्वत्वधर्म्मितावच्छेदकतापन्नस्य उद्देश्यतावच्छेदकत्वं सूचयितुं 'प्रमेयमिति विधेयवाचकपदान्तरनिर्द्देशः, धूमत्वावच्छेदेन व्याप्तिज्ञानद-

शायां तज्ज्ञानादनुमितेरिष्टत्वात् धूमत्वांशे व्याप्तेः सामानाधिकरण्यमात्रावगाहितां सूचयितुं धूम इत्यनभिधाय 'सा धूमव्यक्ति-रिति, 'शाब्दज्ञानासंग्रह इति वह्निव्याप्यवानित्यादिशब्दस्य व्याप्तौ व्याप्तेरवच्छेदकताया इव सामानाधिकरण्यस्याप्यबोधकत्वादिति भावः।

---

दीधितिः।

अतएव व्याप्तिभानांशे प्रकारतया यस्तादृशो-धर्म्मोभासते तत्प्रकारकं पक्षधर्म्मताज्ञानं हेतुः वह्नि-व्याप्यवानित्यत्र च वह्निव्याप्यत्वमेव तथा, धूमवानि-त्यादौ च धूमत्वादिकं धूमसमानाधिकरणेत्यादिव्याप्ति-ज्ञाने तस्यापि प्रकारत्वादिति परास्तम्। धूमसमा-नाधिकरणवह्निव्याप्यं सर्व्वं प्रमेयं धूमवानयं प्रमेयत्व-व्याप्यं सर्व्वमभिधेयं समानाधिकरणवांश्चायमित्यादि-ज्ञानादप्यनुमित्यापत्तिः। न च धूमत्वादेरतिरिक्तवृत्ति-त्वग्रहे स एव प्रतिबन्धकस्तदग्रहे त्वनुमिताविष्टापत्ति-रिति वाच्यम्। एवम्बिधेष्टापत्त्यैव सर्व्वत्र प्रतीकारे विशेषणानुसरणवैयर्थ्यात् व्यभिचाराग्रह-पक्षधर्म्मता-ज्ञानयोरेव हेतुत्वस्य सुवचत्वात्।

गादाधरी विवृतिः।

'अतएव' अतिप्रसङ्गस्य दुर्व्वारत्वादेव, 'व्याप्तिभानांशे इत्यादेर्व्याप्तिप्रकारतान्तर्गतप्रकारताश्रयो यो व्याप्तिग्रहविषयतानियतो धर्म्म इत्यर्थः, वह्निव्याप्यं सर्व्वं प्रमेयं धूमवान् पर्व्वत इत्युक्तज्ञानवारणाय निरुक्तप्रकारताश्रयत्वं धर्म्मविशेषणं, धूमो वह्निव्याप्यः अभाववानयमित्यादिज्ञानवारणाय च व्याप्तिग्रहविषयतानियतत्वं उपात्तं, 'तथा' तादृशोधर्म्मः, व्याप्तिप्रकारतान्तर्गतत्वस्य भेदाभेदसाधारणत्वात् इति भावः। 'धूमत्वादिकं' 'तथेत्यनुषङ्गेणान्वयः। 'धूमसमानाधिकरणेत्यादीति साध्याभाववदवृत्तित्वरूपव्याप्तिग्रहस्थले च ज्ञानद्वयादनुमितिर्म्मयापि न स्वीक्रियते इति भावः। 'वह्निव्याप्यं सर्व्वमित्यत्र तदभाववदवृत्तित्वरूपव्याप्तिज्ञानमेव विवक्षितं धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिरूपव्याप्तिभाने धूमत्वादिप्रकारकपक्षधर्म्मताज्ञानादनुमितेरिष्टत्वात्, तथाच वह्नित्वमात्रस्य साध्यतावच्छेदकत्वे धूमत्वादेर्न व्याप्तिप्रकारतान्तःपातिप्रकारताश्रयत्वं अतो धूमसमानाधिकरणवह्नित्वावच्छिन्नस्य साध्यत्वानुधावनं, साध्यतावच्छेदकप्रकारतानन्तःपातित्वेन व्याप्तिप्रकारताविशेषणे उक्तस्थले दोषाभावादाह, 'प्रमेयत्वव्याप्यमिति, अत्र चाभिधेयत्वाद्यवच्छिन्नव्यापकप्रमेयत्वसमानाधिकरणाभिधेयत्वरूपव्याप्तिरभिप्रेता न तु साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यरूपा साध्याभावस्याप्रसिद्धेर्मीमांसकैरन्यथाख्यात्यनभ्युपगमात् भ्रमात्मकतादृशव्याप्तिज्ञानमादाय तन्मतेऽतिप्रसङ्गाभावात् न वा समानाधिकरणत्वाव-

च्छिन्नव्यापकसाध्यसामानाधिकरण्यरूपा तादृशव्यापकताग्रहदशायां(१) समानाधिकरणत्वप्रकारकज्ञानादनुमितिस्तेषामिष्टत्वात्। 'अतिरिक्तवृत्तित्वग्रहे' व्याप्तिशून्यवृत्तित्वग्रहे, 'अनुमिताविति, वह्निव्याप्यं सर्व्वं प्रमेयं धूमवान् पर्व्वत इत्यादिज्ञानादित्यादिः, 'एवञ्चिधेष्टापत्त्यैवेति व्याप्तिग्रहविषयधर्म्मिवृत्तिधर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेनैवानुमितिहेतुता वह्निव्याप्योधूमो द्रव्यवान् पर्व्वत इत्यादौ द्रव्यत्वादावतिरिक्तवृत्तित्वग्रहे स एव प्रतिबन्धकः तदग्रहेऽनुमिताविष्टापत्तिरित्यपि वक्तुं शक्यतया व्याप्तिग्रहविषयधर्म्मिमात्रवृत्तिधर्म्मप्रकारकत्वादिविशेषणवैयर्थ्यापातादित्यर्थः, अत्रेष्टापत्तौ प्रतिबन्ध्यन्तरमाह, 'व्यभिचाराग्रहेति, 'एवकारेण व्याप्तिज्ञानहेतुताव्यवच्छेदः व्याप्तिज्ञानशून्यतादशायां व्यभिचाराग्रहे तद्देशानुमिताविष्टापत्तिसम्भवात्, यदि च व्यभिचाराव्यभिचारयोर्द्वयोरेव यत्राग्रहस्तत्रानुमितिरनुभवविरुद्धत्वान्न तत्रेष्टापत्तिः सम्भवतीत्युच्यते तदा प्रमेयत्वव्याप्यं सर्व्वमित्यादिज्ञानादप्यनुमितेरनुभवविरुद्धत्वात् प्रकृतेऽपीष्टापत्तिर्न सम्भवतीति भावः।

---

दीधितिः।

किञ्च पुरुषान्तरस्य तस्यैव वा कालान्तरे वर्त्तमानं व्याप्तिग्रहमादायातिप्रसङ्गस्य भङ्गाय स्वसमानकालीनस्वसमानाधिमरणव्याप्तिग्रहविषयधर्म्मिमात्रवृत्तिधर्म्मप्रकारकं पक्षधर्म्मताज्ञानं वाच्यं तथा च स्वत्व-

---

(१) तादृशव्याप्तिप्रग्रहदशायामिति पा०।

स्याननुगतत्वात्कारणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्य्यवसायित्वे मिथोव्यभिचारः तत्तत्पक्षधर्म्मताज्ञानत्वेनैव हेतुत्वसम्भवेऽधिकवैयर्थ्यञ्च ।

---

गादाधरी विवृतिः ।

ननु व्याप्तिप्रकारतानिरूपिता या संसर्गता तन्निरूपिता या विशेष्यवृत्तिविषयता तन्निरूपिता या विषयता तन्निरूपकीभूतो यो व्याप्तिग्रहविषयमात्रवृत्तिधर्म्मस्तत्प्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुता वाच्या तादृशधर्म्मो व्याप्तिः धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्तौ हेतुतावच्छेदकीभूतधूमत्वादिश्च न तु तद्घटकसामानाधिकरण्यादिकं,साध्याभाववदवृत्तित्वादिरूपव्याप्तिघटकाभावमादायातिप्रसङ्गभङ्गाय व्याप्तिग्रहविषयमात्रवृत्तित्वोपादानं इति नोक्तापत्तीनामवकाशः इत्यतो दूषणान्तरमाह,'किञ्चेति, 'कालान्तर इति, कारणतावच्छेदककोटिप्रविष्टलिङ्गादीनां अतोतत्वदशायामपि अनुमितेरुत्पत्त्या प्रकृते कारणतावच्छेदकविशिष्टप्राक्सत्तायाः कार्य्यजनने नियामकत्वासम्भवादतिप्रसङ्गो बोध्यः । 'स्वसमानकालीनेति स्वक्षणवृत्तीत्यर्थः, स्वपदं फलोपधायकत्वेनाभिमततत्तत्पक्षधर्म्मताज्ञानव्यक्तिपरं, 'वाच्यमिति हेतुतया स्वीकार्य्यमित्यर्थः, तादृशपक्षधर्म्मताज्ञानत्वेनेत्यादिः, व्याप्तिज्ञानोत्पत्तिद्वितीयक्षणोत्पन्नपक्षधर्म्मताज्ञानात् व्याप्तिज्ञाननाशेऽपि अनुमितिरेतन्मते स्वीक्रियते इति बोध्यम् । तत्तत्पक्षधर्म्मताज्ञानत्वेन हेतुत्वसम्भव इति फलोपधायकीभूतपक्षधर्म्मताज्ञाननिष्ठानां तत्त-

द्व्यक्तित्वानां किञ्चिदविशेषितानामेव हेतुतावच्छेदकत्वसम्भव-इत्यर्थः। यथाश्रुते तत्तद्व्यक्तित्वनिवेशस्यावश्यकत्वे पक्षधर्म्मता-ज्ञानत्वनिवेशे प्रयोजनविरहादसङ्गतिः। 'अधिकवैयर्थ्यञ्चेति तादृशधर्म्मप्रकारकत्वादिविशेषणवैयर्थ्यञ्चेत्यर्थः। इदमुपलक्षणं तादृशरूपेण हेतुत्वेऽनन्तकार्य्यकारणभावप्रसङ्गेन महागौरवमपि बोध्यम्।

दीधितिः।

**एतेन गृह्यमाणव्याप्यवच्छेदकताकेत्याद्युपदर्शित-प्रकारद्वयमपि प्रत्युक्तं वेदितव्यं एवं यद्धर्म्मावच्छेदेन व्याप्तिज्ञानं तद्धर्म्मप्रकारकं पक्षधर्म्मताज्ञानं हेतुरि-त्यपि परास्तम्। तत्तद्धर्म्मविश्रान्तमूर्त्तिकत्वेनाप्य-ननुगतत्वाच्च।**

गादाधरी विवृतिः।

'एतेन' उक्तरीत्या कारणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्य्य-वसायितापातेन, 'एवमिति स्वसमानकालीनत्व–स्वसमानाधि-करणत्वयोरन्यतरप्रवेशस्यावश्यकतया अननुगमेनेत्यर्थः, 'यद्धर्म्माव-च्छेदेनेति तद्धर्म्मावच्छिन्नव्याप्तिज्ञानसहिततद्धर्म्मप्रकारकपक्षधर्म्म-ताज्ञानत्वावच्छिन्नमित्यर्थः, 'परास्तमिति, साहित्यस्य समान-कालीनत्वात्मकत्वे स्वसमानाधिकरणत्वस्य सामानाधिकरण्यरूपत्वे स्वसमानकालीनत्वस्य व्याप्तिज्ञानेऽवश्यं निवेशनीयत्वात् इति

भावः । एकलक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तद्दत्त्वं यदि तत्साहित्यं तदा नैतादृशाननुगम इत्यतः प्रकारान्तरेणाननुगममाह, 'तत्तद्धर्म्मेति विशिष्य तत्तद्धर्म्मघटितत्वेनेत्यर्थः, 'अननुगतत्वादिति, तथाच धूमत्वादिप्रकारकपक्षधर्म्मताज्ञानस्यालोकत्वाद्यवच्छिन्नलिङ्गकानुमितौ व्यभिचारः तत्तद्धर्म्मावच्छिन्नलिङ्गकानुमितित्वस्य कार्य्यतावच्छेदकत्वोपगमेऽपि हेतुतावच्छेदकभेदेन कारणताबाहुल्यमिति भावः । यद्यपि हेतुतावच्छेदकघटितव्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यैव हेतुतायाः केवलान्वयिसाधारण्यानुरोधेन वक्तव्यतया तस्य च हेतुतावच्छेदकमनन्तर्भाव्य कारणताया दुष्कल्पतया नैयायिकमतेऽपि हेतुतावच्छेदकभेदेन परामर्शकारणताभेद आवश्यकः व्याप्यतावच्छेदकानवगाहिशाब्दपरामर्शादनुमित्यनुत्पादश्च समानः, तथापि निरुक्तधर्म्मापेक्षया व्याप्तिप्रकारकपक्षधर्म्मतानिश्चयत्वस्य लघुतया तेन रूपेण कारणताकल्पनमेवोचितमित्यत्र तात्पर्य्यम् ।

---

तत्त्वचिन्तामणिः ।

अपि च यत्र धूमत्व-व्याप्त्योर्वैशिष्ट्यं प्रथममेव प्रत्यक्षेन युगपत्पक्षधर्म्मे भासते तत्र लाघवात् व्याप्यत्वज्ञानत्वमेव कारणतावच्छेदकम् । न चैवमतिरिक्तविशिष्टज्ञानकारणत्वे गौरवं दोषाय, सप्रमाणकत्वात् कारणताग्रहदशायां फलमुखगौरवस्य सिद्ध्यसिद्धिभ्यामदोषत्वात् ।

दीधितिः ।

यत्रेच्छा तत्साधनताज्ञानस्येच्छाहेतुत्वेऽपि समानमिति चेत् सत्यं, प्रतिवच्यते हि तत्र लघु-गुरुरूपाभ्यां युगपदुपस्थितौ लघुरूपावच्छेदेनैव कारणत्वं कल्प्यते लाघवात् नियमादेरेकतररूपावच्छेदेनाप्यक्लृप्तत्वात् इत्याशयवानाह, 'अपि चेति। ननु स्वसमानाधिकरणाभावेत्यादिव्याप्तौ स्वपदार्थस्यैकस्याभावेन धूमादिकमेव विशिष्य उपादेयं तत्र च धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणेन्धनवानयमिति ज्ञानादप्यनुमितिप्रसङ्गेन तादृशवह्निसमानाधिकरणधूमत्वं व्याप्तिस्तत्प्रकारकमेव च पक्षधर्म्मताज्ञानमननुगतमपि हेतुरिति वक्तव्यं तथा च यद्धर्म्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्म्मताज्ञानत्वेनैव हेतुत्वम्, अयं वह्निव्याप्यवान् धूमो वह्निव्याप्योऽयं धूमवान् वह्निर्धूमव्यापकोऽयं धूमवानित्यादिसकलवित्तिव्यापकत्वात् न तूपदर्शितव्याप्तिप्रकारकज्ञानत्वेनाव्यापकत्वात् ।

गादाधरी विवृतिः ।

ननु यत्त्व-तत्त्वाननुगमस्य दोषत्वे इष्टत्वेन फलसाधनताज्ञानस्य उपायेच्छाद्यहेतुत्वेन यन्नेच्छा तत्साधनताज्ञानं हेतुरितीष्टसाधनताज्ञानहेतुतापरिष्कारो मणिकृतां 'विरुद्ध्येत इत्याशङ्कते, 'यन्नेच्छेति,'प्रतिवध्यत इति, तत्र गत्यन्तरविरहेण सुख-दुःखाभावत्वादिप्रकारकफलगोचरेच्छायास्तदवच्छिन्नसाधनताज्ञानस्य चाननुगतेनापि तादृशेच्छात्वेन तादृशज्ञानत्वेन च हेतुता स्वीक्रियते कार्य्यतावच्छेदककोटौ चाव्यवहितोत्तरत्वसम्बन्धेन तत्तत्कारणतावच्छेदकावच्छिन्नवैशिष्ट्यं निवेश्य व्यभिचारो वारणीयः इच्छागता जातिविशेषा एव वा तत्तत्फलेच्छाजन्यतावच्छेदकतया स्वीक्रियन्ते नानाफलगोचरेच्छास्थले च नानैवेच्छाव्यक्तयः स्वीक्रियन्ते प्रयत्नवदिच्छायौगपद्यस्वीकारेऽपि क्षतिविरहात् इति भावः । ननु पर्व्वतवृत्तिधूमत्व-वह्निव्याप्त्योर्व्वैशिष्ट्यं यत्र युगपदेव पक्षधर्म्मे भासते तत्र विशिष्टपरामर्शत्वावच्छिन्नस्यैव व्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानत्वावच्छिन्नस्याप्युपस्थितिरस्ति तथाच तेन रूपेणैव किन्न हेतुत्वमुपेयते, एतन्मतेऽवच्छेदकलाघववत् तन्मतेऽपि नियमांशाकल्पनेन लाघवसत्त्वात् इत्याशङ्कां परिजिहीर्षुः 'अपिचेत्यादिमूलाशयमाह ; 'लघ्विति । 'नियमादेरिति आदिना अनन्यथासिद्धत्वपरिग्रहः, 'एकतररूपेति, उक्तशाब्दपरामर्शस्थले यद्धर्म्मावच्छेदेन व्याप्तिज्ञानं तद्धर्म्मप्रकारकपक्षधर्म्मताज्ञानस्य नैयायिकमतासिद्धत्वादिति भावः । हेतुतावच्छेदकभेदेन कारणताभेदं नैयायिकमतेऽप्याशङ्का मीमांसकमते लाघ-

व्यवसायवारणाय विशेष्यतासम्बन्धेन तत्तद्विषयधर्म्मितावच्छेदकतापन्नसाक्षात्कारित्वप्रकारकप्रत्यक्षं प्रति स्वरूपसम्बन्धेन तत्तद्विषयनिष्ठलौकिकसन्निकर्षादिजन्यत्वस्य हेतुत्वात्तद्विरहादनुमित्यनन्तरं न वह्निं साक्षात्करोमीत्यनुव्यवसायापत्तिरित्यर्थः। 'लौकिकसन्निकर्षादीत्यादिना दोषविशेषपरिग्रहः, 'आत्मानुमिताविति, 'तस्य' आत्मनिष्ठमनःसंयोगरूपलौकिकसन्निकर्षजन्यत्वस्य। न चैवमात्मोपनीतभाने भवतामपि न कथं साक्षात्कारित्वग्रहः अनुमितेरिव तस्यापि आत्ममनोयोगासमवायिकारणकत्वादिति वाच्यम्। मानसत्वावच्छिन्नाया एव मनोयोगजन्यतायास्तद्ग्राहकत्वोपगमात् मानसज्ञाने आत्मनो लौकिकसन्निकर्षादेव भानात् चाक्षुषादावेव तस्योपनीतस्य भानात् तत्र च मानसत्वावच्छिन्नजन्यताया अभावात् अनुमितौ मानसत्ववादिनाञ्च आत्मानुमितौ तादृश्या अपि जन्यताया अनपायादिति भावः। नन्वक्तलाघवेनानुमितेर्मानसत्वसिद्धौ उक्तातिप्रसङ्गवारणाय साक्षात्कारित्वग्रहं प्रत्यनुमितिभेदस्य कारणत्वमेकं कल्पनीयमित्यतः प्रत्यक्षप्रमाणेनानुमितौ प्रत्यक्षत्वाभावं व्यवस्थापयति, 'वह्निमिति, यद्यपि वह्निं न साक्षात्करोमीति प्रतीतेरात्मनिष्ठो वर्त्तमानकालावच्छिन्नो वह्निसाक्षात्काराभाव एव विषयः न त्वात्मनिष्ठवर्त्तमानवह्निज्ञाने साक्षात्कारत्वाभावः स्वरूपतो भासमानसाक्षात्त्वजातिः पदार्थतावच्छेदिकाया अभावस्य तादृशशब्देनाप्रत्यायनात्, तथाप्येकविशेषणविशिष्टाधिकरणे विशेषणद्वयविशिष्टाभावप्रतीतेः तद्विशेषणवति विशेषणान्तराभावपर्य्यवसन्नत्वमिति

वह्निविषयकत्ववति ज्ञाने साक्षात्कारित्वरूपविशेषणाभावः प्रकृते पर्य्यवस्यतीत्याशयेनोक्तं 'साक्षात्कारित्वाभावेति । ननु सुरभि चन्दनमित्यादिचाक्षुषदशायां जातस्य सौरभं न पश्यामीति प्रत्ययस्येवोक्तप्रत्ययस्यापि भ्रमत्वमस्त्वित्यत आह, 'अगत्येति, चन्दनं पश्यामीत्यादिप्रतीत्या सुरभि चन्दनमित्यादिज्ञाने चाक्षुषत्वादेरावश्यकतया तत्र गत्यन्तरविरहेणैव सौरभं न पश्यामीत्यादौ चाक्षुषत्वाद्यभावांशे भ्रमत्वकल्पनमित्यर्थः । अनुमितौ च साक्षात्त्वानभ्युपमेन न साक्षात्करोमीति प्रतीतेः प्रमात्वसम्भवात्, न तत्परित्यागः धियां प्रमात्वस्यौत्सर्गिकत्वादिति भावः । अत्र नव्याः सौरभं न पश्यामि न साक्षात् करोमीत्यादिप्रतीतेः प्रमात्वानुरोधेन लौकिकत्वाख्योविषयताविशेषः कल्प्यते, तद्विशिष्टचाक्षुषत्वाद्यभावो न पश्यामीत्यस्य, तदभाव एव न साक्षात् करोमीत्यस्य विषयः । न च तथापि सौरभनिरूपिततादृशविषयिताविशिष्टचाक्षुषाप्रसिद्ध्या सौरभं न पश्यामीत्यत्रागतिरेवेति वाच्यम् । चाक्षुषनिष्ठविषयितायां सौरभनिरूपितत्वाभावस्यैव तादृशप्रत्ययविषयत्वोपगमात्, अन्ध आकाशं न पश्यतीत्यादावपि कथञ्चित्प्रमात्वमुपपादनीयम् । न चातिरिक्तविषयितापसिद्धान्ततया न स्वीकरणीयेति वाच्यम् । प्रतीत्यनुरोधेन तत्कल्पनेऽपसिद्धान्तभयस्याविरोधित्वात् । अतएवाभावत्व-प्रतियोगित्वादीनामतिरिक्तपदार्थत्वं ग्रन्थकृतामनुमतम् । न चैवं प्रत्यक्षत्वजातिरेव प्रामाणिकी स्यात् तत्कार्य्यस्य लौकिकत्वेनैवोपपादनसम्भवादिति वाच्यम् । विशेषणज्ञानादिजन्यतावच्छेदकतयैव तत्सिद्धेः,

विषयिताविशेषापेक्षया जातिस्तत्त्वथात्वे लाघवात् सर्व्वांशोपनीत-ज्ञानस्य प्रामाणिकत्वे तदसंग्राहकतयापि लौकिकत्वस्य विशेषण-तावच्छेदकप्रकारकज्ञानादिजन्यतावच्छेदकत्वासम्भवाच्च। एवञ्चानु-मितिः प्रत्यक्षतामतेऽपि न तत्र साक्षात्त्वाभावग्रहानुपपत्तिरिति तस्याः प्रत्यक्षत्वाभावे युक्त्यन्तरमेवानुसन्धेयम्। 'सन्निकर्षविरहा-दित्यनुमानप्रामाण्यव्यवस्थापिकां मूलयुक्तिं सामान्यलक्षणानभ्युप-गमपक्षे सङ्गमयति, 'सामान्येति, 'अप्रसिद्धवह्न्यादीति पूर्व्वाज्ञात-पर्व्वतीयवह्न्यादीत्यर्थः, 'व्याख्यातं' प्रत्यक्षविजातीयतया व्यवस्था-पितम्, अन्येषां युक्तिमुपन्यस्यति, 'व्यवस्थापयिष्यत इति। 'केचि-दित्यस्वरसोद्भावनं तद्बीजन्तु असन्निकृष्टस्याभावस्य साध्यतया अनुमितौ भानेऽपि तस्याः प्रत्यक्षत्वं निराबाधमेव यत्किञ्चि-द्विषयसन्निकर्षजन्यतयैव प्रत्यक्षत्वनिर्व्वाहात्, साध्यांशे प्रकार-तया भासमानस्याभावत्वादेः सामान्यस्यापि सन्निकर्षतया अज्ञा-तत्वमात्रेणाप्यसन्निकृष्टत्वानिर्व्वाहाच्च। न चाज्ञातस्य साध्यस्या-नुमितौ ज्ञाने तादृशाभावविषयकोपनायकस्य तत्र व्यभिचार-प्रसक्तिरेव तस्याः प्रत्यक्षत्वबाधिकेति वाच्यम्। प्रकारताया एव उपनायकज्ञानजन्यतावच्छेदकत्वोपगमेन व्यभिचारानवकाशात्। तन्मुख्यविशेष्यकमानसोपनीतभानेऽपि तस्य स्वांशे अभेद-सम्बन्धेन प्रकारतोपगमेन तत्संग्रहात्। अन्यथा सामान्यप्रत्या-सत्तिजन्याज्ञातविशेष्यकबोधे व्यभिचारस्य दुर्व्वारत्वात्। वस्तुतः साध्यतावच्छेदकप्रकारेणाज्ञानेऽपि अभावत्वादिना साध्यस्य सामान्यप्रत्यासत्त्यैव ज्ञानं प्राक्सम्भवतीति नोपनयस्य व्यभिचार-

इत्यनुसरणीयं(१) अप्रसिद्धसाध्यकानुमितिमनभ्युपगम्य तादृशयुक्तिं दूषयतां परेषां मतमाह, 'तत्रेति, 'भेदत्वादिना' पृथिवीनिष्ठभेदत्वादिना, 'आदिना ह्रदे धूमात्यन्ताभाव इत्याद्यनुमितिप्रकारस्यात्यन्ताभावत्वस्य परिग्रहः, 'जलादिप्रतियोगिकत्वग्रहः' जलादिप्रतियोगिकत्वानुमितिः, जलादिप्रतियोगिकत्वं साध्यतया अनुमितेर्विषय इति यावत्, वृत्त्यनियामकसंसर्गस्य व्यापकताघटकत्वे तु जलादिरूपसाध्यस्य संसर्गतयापि तत्प्रतियोगिकत्वं विषयः सम्भवतीति द्रष्टव्यम्। एतावतैव जलादिभेदस्य तादृूप्येणाज्ञानदशायां पृथिव्यादिनिष्ठजलादिभेदसिद्धग्रा कृतमप्रसिद्धसाध्यकानुमितिस्वीकारेण इति भावः। जलादिप्रतियोगिकत्वानुमापकान्वयिनोऽनुपस्थितिदशायामपि व्यतिरेकिणा तद्व्यक्तित्वादिनापि तदनुमानसम्भवो बोध्यः। अत्राप्यपरइत्यस्वरससूचनाय, तद्बीजन्तु पृथिवीनिष्ठभेदत्वादिना भेदमात्रानुपस्थितावपि जलादिव्यापकाभावप्रतियोगित्वादिना भावेन पृथिव्यादौ जलादिभेदसिद्धेरप्रसिद्धसाध्यकानुमितिमनभ्युगम्य दुरुपपादता, तदपलापे पक्षैकदेशे जलादिभेदस्य प्रसिद्धैरव कदाचित् तत्तत्साध्यकानुमितेरप्युपपादनसम्भवात् तादृशानुमित्यैवाप्रसिद्धसाध्यकानुमानखण्डनौचित्यादिति।

अनुमितिकारणविशिष्टपरामर्शानुपपत्तिरूपपूर्व्वपक्षमध्यकथितबाधकमुद्धृत्य 'यो यत्र विशिष्य पूर्व्वमित्यादिनियमं स्थापयित्वा अनुमितिस्थले पक्षे साध्योपनीतज्ञानं सामान्यप्रत्यासत्ति-

(१) इत्यनुसन्धेयमिति पा०।

मतेऽपि निराकुर्व्वाणस्य कस्यचिन्मतं निरसितुमुपन्यस्यति, मूले 'कश्चिदिति, 'परम्परासम्बन्धेन व्याप्यत्वं' परम्परासम्बन्धघटित-व्याप्यत्वम् ।

---

तत्त्वचिन्तामणिः ।

भवतु तावदेवं तथापि जातिरेव लिङ्गं स्यात् न तु व्यक्तिः तथाच सर्व्वोपसंहारेण व्यक्तौ व्याप्तिग्रहार्थं सामान्यलक्षणप्रत्यासत्तिव्युत्पादनमफलम् (१) स्यात् दृश्यते च परम्परासम्बन्धज्ञानं विना जातिव्याप्ति-मविदुषोऽपि धूमाद्वह्न्यनुमानम् । न हि व्याप्यताव-च्छेदकतया भासमानस्यावश्यं व्याप्यताग्रहः, माना-वात्, तस्मात् पक्षधर्म्मे व्याप्तिविशिष्टज्ञानं तदनन्तर-विशिष्टवैशिष्ट्यज्ञानं पक्षे वा तृतीयलिङ्गपरामर्शः । अन्ये तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वं तत्सामानाधिकरण्यञ्च व्याप्यत्वं तथाच लाघवात् व्यापकताज्ञानमनुमितिहेतुः साध्यस्य पक्ष-धर्म्मव्यापकताज्ञानञ्च परामर्शः, न तु साध्यव्याप्तस्य पक्षधर्म्मताज्ञानं साध्यव्याप्यवत्पक्षधर्म्मताज्ञानं वा गौरवात् ।

---

(१) सामान्यलक्षणप्रत्यासत्त्युपादानमफलमिति पा० ।

दीधितिः ।

उपसंहरति, 'तस्मादिति, वाशब्दोऽनास्थायाम् उभयथापि प्रकृताक्षतेः। वस्तुतो व्याप्य-पक्षयोर्वैशिष्ट्या-वगाहिज्ञानत्वेन हेतुत्वं विनिगमनाविरहेणान्यतर-विशेषण-विशेष्यभावस्यातन्त्रत्वात् । 'लाघवादिति, अथाव्याप्यवृत्तेर्व्यापकत्वसम्पत्तयेऽभावस्य प्रतियोग्य-सामानाधिकरण्यं वाच्यं तच्च स्वप्रतियोग्यनधिकरण-वृत्तित्वम् एवञ्चावृत्तिगगनादेर्धर्म्ममात्रव्यापकत्वं स्यात् तादृशघटत्वाद्यभावाप्रतियोगित्वात् तदधिकरणा-प्रसिद्ध्या च तदभावस्य स्वप्रतियोग्यनधिकरणवृत्तित्वा-सम्भवात् तथा च तद्व्यावृत्तये व्यापके हेतुसामाना-धिकरण्यं वाच्यम्। न चैवं, हेतोर्व्यापकसामाना-धिकरण्यापेक्षया लाघवमिति चेदस्तु तावदेवमापातत-स्तथापि वृत्तिमत्त्वमात्रमुपादेयम्। न चैवं हेतोः साध्यसामानाधिकरण्यस्य संशये व्यतिरेकनिश्चये वा अनुमित्यापत्तिरिति वाच्यम्। संशये दृष्टत्वात् व्यति-रेकनिश्चये च पक्षधर्म्मत्वाग्रहे परामर्शविरहात् तद्ग्रहे च साध्यासमानाधिकरणधर्म्मान्तरग्रहस्यैव तस्यापि विरोधित्वात् अन्यथा त्विष्टत्वात् पर्व्वतो वह्निव्याप्य-

धूमवान् पाषाणमयः पाषाणमयावृत्तिश्च वह्निरिति ज्ञानेन च तुल्ययोगक्षेमं पर्व्वतवृत्तिधूमव्यापको वह्नि-धूमवदवृत्तिश्चेति ज्ञानम्। न च साध्याप्रतियोगिक-स्वसमानाधिकरणयावदत्यन्ताभावकत्वं साध्याप्रति-योगिकत्वावच्छेदकस्वसमानाधिकरणात्यन्ताभावत्वकत्वं वा व्याप्तिः साध्यप्रतियोगित्वञ्च केवलान्वयिनि साध्य-स्यान्योन्याभावे सम्बन्धविशेषावच्छिन्नात्यन्ताभावे वा प्रसिद्धमिति वाच्यम्। गौरवात् व्यापकत्वाद्यनन्त-भावेन यावत्त्वस्य दुर्व्वचत्वात् प्रमाणाभावेन स्वरूप-सम्बन्धविशेषरूपत्वासम्भवेनावच्छेदकत्वस्यानतिरिक्तवृ-त्तित्वपर्य्यवसायित्वाच्च, व्यापकतायाञ्च प्रतियोगित्वादेः सामान्याभावस्योक्तत्वात् सम्बन्धादिनिष्ठसाध्यप्रति-योगित्वव्यक्तेरभावस्य व्यभिचारिसाधनसमानाधिक-रणयावदत्यन्ताभाववृत्तितया त्वयापि तस्यावश्यं वाच्य-त्वात् साधनसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेदकधर्म्मवत्त्वरूपव्यापकत्वज्ञानमपेक्ष्य साध्यवद-न्यावृत्तित्वज्ञानस्य लघुत्वात्।

---

गादाधरी विवृतिः।

'सामान्यप्रत्यासत्तिव्युत्पादानं' सामान्यप्रत्यासत्तित्वस्वीकारः,

जातिमात्रस्य लिङ्गत्वोपगमेऽनुभवविरोधमप्याह, 'दृश्यते चेति'। ननु धूमत्वेन धूमे व्याप्तिग्रहदशायां धूमत्वोपस्थितेरावश्यकतया तत्रापि परम्परासम्बन्धघटिता व्याप्तिः शक्यग्रहा, अधिकरणे धूमत्वावच्छिन्नवत्त्वघटितधूमव्यापकताग्रहे धूमघटितसम्बन्धेन धूमत्वस्याप्यधिकरणत्वांशे भानसम्भवेन धूमत्वव्यापकताया अपि वह्नौ भानसम्भवात्। धूमत्ववति संयोगेन वह्निमद्वृत्तित्वे भासमाने धूमत्वेऽपि वह्निमतः स्वसंयोगिसमवायरूपपरम्परासम्बन्धभानसम्भवाच्चेति व्यक्तिव्याप्तिज्ञानदशायां जातिव्याप्यग्रह एवाप्रसिद्ध इत्यत आह, 'न हीति, 'मानाभावादिति, धर्म्मिणः साक्षात्सम्बन्धभाने धर्म्मस्य परम्परासम्बन्धभाननियमासिद्धेरिति भावः। अनुमित्यन्यथानुपपत्तेर्म्मानत्वसम्भवेनात्रापरितोषात् तादृशनियमे बाधकं पुरयति, दीधितौ 'तन्निष्ठेति, अवच्छेदकधूमत्वादिनिष्ठं अवच्छेदकान्तरं धूमत्वत्वादि, 'असम्भवात्' अवच्छेदकधूमत्वादौ अनुमित्यौपयिकव्याप्तिग्रहासम्भवात्, अभावे हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यस्य व्यापकताघटकतया हेतुतावच्छेदकस्यापि तथात्वात् प्रकृते अविशेषितधूमत्वादिविशेषिताधिकरणस्य व्यापकताघटकत्वोपगमेऽपि धूमत्वत्वादिप्रकारेण व्यापकसामानाधिकरण्यप्रकारकज्ञानमेवानुमितिहेतुर्वाच्यः, सामानाधिकरण्यांशे निर्धर्म्मितावच्छेदकज्ञानस्यानुमित्यहेतुत्वात् तथा सति परम्परासम्बन्धेन धूमत्वादिशून्यतया निश्चीयमाने ह्रदादावपि वह्न्याद्यनुमानापत्तेः, वह्निसामानाधिकरण्यसामान्याभावस्य तत्राग्रहे केवलेन वह्निसमाना-

धिकरणत्वेन धूमत्वादेस्तदा तत्र ग्रहसम्भवात् धूमत्वत्वाद्यवच्छिन्ने सामानाधिकरण्यग्रहः कथं धूमत्वत्वाद्युपस्थितिं विना सम्भवति, साध्याभाववदवृत्तित्वरूपा व्याप्तिरपि पक्षवृत्तौ व्याप्यतावच्छेदक-निश्चयं विना प्रायशो दुर्निश्चयतया उपनीतविपरीतकोटेरपि भान-सम्भवेन संशयसम्भवात्, निर्द्धर्म्मितावच्छेदककसंशयासम्भवेन (१) साध्याभाववदवृत्तिमानिति निश्चयसम्भवेऽपि पक्षवृत्तित्वावच्छेदेन व्यभिचारसंशये च पक्षः साध्याभाववदवृत्तिमानिति निश्चयोपि दुर्घट इति भावः। 'मानाभावादित्यस्य मानस्यावच्छेदके व्याप्ति-प्रमितिजनकस्य तन्निष्ठावच्छेदकान्तरग्रहस्याभावात् नियमेना-सत्त्वादित्यर्थसम्भवेन पूरणं विनापि निर्व्वाह इति द्रष्टव्यम्। 'तस्मादित्यादेरव्यवधानव्यवस्थापितानुमानप्रामाण्योपनय-प्रत्यास-त्तित्वयोरुपसंहारत्वासम्भवात् प्रागव्यवस्थापितविशिष्टपरामर्शहेतु-त्वोपसंहारत्वमाविष्कर्त्तुमाह, 'उपसंहरतीति, मूले 'पक्षधर्म्म-व्याप्तिविशिष्टज्ञानमिति, विशेष्यतायां विशेषणतायां वा अवच्छे-दिकया व्याप्त्या प्रकारेण विशेष्यस्य शिशेषणस्य वा पक्षीयहेतो-र्ज्ञानं प्रथमत इत्यर्थः, एतज्ज्ञानं सामान्यलक्षणाप्रत्यासत्तित्वमते स्मरणमेव अन्यथा तु महानसीयधूमादिविशेष्यकव्याप्तिस्मरणाधीनं प्रत्यक्षं तत्र च व्याप्ति-पक्षधर्म्मतयोरेकत्र द्वयमित्यादिरीत्या भाने-ऽपि न तस्य व्याप्तिविशिष्टधूमे पक्षधर्म्मतायाः पक्षे वा तादृशधूमस्य वैशिष्ट्यावगाहिता सम्भवति तादृशबुद्धौ व्याप्तिविशिष्टधूमज्ञानस्य

(१) संशयानुपगमेनेति पा०।

विशेष्यतावच्छेदकविशिष्टविशेष्यादिज्ञानविधया हेतुत्वात् । अतएव न तस्यानुमितिहेतुतापि, तत्साधारण्येन एकत्र व्याप्ति-पक्षधर्म्मतोभयावगाहिज्ञानत्वेनानुमितिहेतुत्वाभ्युपगमे संशयादनुमितिवारणाय तदन्यत्वस्याधिकस्यानुमितिजनकतावच्छेदके निवेशापातात् विशिष्टवैशिष्ट्यावगाहित्वेनैवानुमितिजनकत्वोपगमादिति । 'तदनन्तरमिति तदनन्तरजातमित्यर्थः, 'विशिष्टवैशिष्ट्यज्ञानं' व्याप्तिविशिष्टे पक्षवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नं, 'पक्षे वा तृतीयलिङ्गपरामर्शः' पक्षे व्याप्तिविशिष्टप्रतियोगिकवैशिष्ट्यज्ञानत्वावच्छिन्नं वा, अनुमितिहेतुरिति शेषः । उभयोः पक्षयोस्तुल्यतया पूर्व्वत्रापरितोषाभावाद्वाकारः एकत्रानिर्भरसूचकतया व्याचष्टे, दीधितौ 'वेति । ननु पूर्व्वमेकविधस्यैव परामर्शस्यानुमितिहेतुतायाः प्रतिज्ञातत्वादत्र विकल्पेनोभयविधस्य तद्धेतुत्वोपसंहारविरोध इत्यत आह, 'उभयथेति, 'प्रकृतानुमितेरिति अनुमितिलक्षणनिर्व्वाहादित्यर्थः, यादृशस्य हेतुता तादृशपरामर्शजन्यताया एवानुमितिलक्षणे निवेश्यत्वादिति भावः । एवञ्च पक्षधर्म्मस्य व्याप्तिविशिष्टज्ञानम् अनुमितिहेतुरित्यस्यापि पक्षतावच्छेदकावच्छिन्नविशेष्यकं व्याप्यप्रकारकं व्याप्यवच्छिन्नविशेष्यकं पक्षप्रकारकं वा ज्ञानमनुमितिहेतुरित्येवार्थ इति नोपक्रमविरोध इत्याशयः । उक्तपरामर्शयोरेकस्मादेवानुमितिर्नान्यस्मादित्यत्र युक्तिविरहेण प्रत्येकरूपावच्छिन्नस्य न जनकत्वम् उभयासंग्राहकत्वादिति मूलोपष्टम्भस्वरसं प्रकाशयन् उभयानुगमकं कारणतावच्छेदकमाह, 'वस्तुत इति । अथवा मूलस्थवाकारः समुच्चये, तथाच प्रत्येकरूपेण हेतुत्वं न

विवक्षितम् अपि तूभयोरनुगतरूपेणैवेत्याह, 'वस्तुत इति। 'विनिगमनाविरहेण' विनिगमनाभावात्, हेतुभूतयोरुभयोरसंग्राहकत्वेन 'अतन्त्रत्वात्' विशिष्य जनकतानवच्छेदकत्वात्। इदमत्र बोध्यं, व्याप्य-पक्षयोर्वैशिष्ट्यावगाहित्वं न वास्तवं पक्षानुयोगिकं व्याप्यप्रतियोगिकं यद्वैशिष्ट्यं हेतुतावच्छेदकसम्बन्धः तदवगाहित्वं भ्रमस्थलासंग्रहात् व्याप्त्याद्यनवगाहिज्ञानसाधारण्याच्च। नापि व्याप्यप्रतियोगिकत्व-पक्षानुयोगिकत्वोभयोपरागेण तादृशसंसर्गावगाहित्वं सम्बन्धसंसर्गकज्ञानासंग्रहात् संसर्गानुयोगित्व-प्रतियोगित्वयोर्विशिष्टबुद्ध्यविषयत्वात्, समूहालम्बनवैलक्षण्यस्य विषयतावैलक्षण्येनैवोपपत्तेः। नापि व्याप्य-पक्षोभयोपरागेण तादृशसंसर्गावगाहित्वं तत्, तच्च तदुभयनिरूपितहेतुतावच्छेदकसम्बन्धीयसंसर्गताकत्वं, भ्रमस्थले उभयांशे संसर्गाप्रसिद्धावपि संसर्गताया विशेष्य-विशेषणोभयनिरूपितत्वान्नानुपपत्तिरिति, एवं सति पर्व्वतवान् व्याप्य इत्यादिज्ञानादप्यनुमित्यापत्तेः। न च तत्र संयोगरूपहेतुतावच्छेदकसम्बन्धावच्छिन्नाधारत्वं सम्बन्धः न तु संयोगस्तस्य उभयनिष्ठत्वात् तादृशबुद्धेरपि प्रमात्वप्रसङ्गात्, यत्र संयोगो व्याप्यताघटकसम्बन्धस्तत्र पक्षे संयोगावच्छिन्नाधारतया व्याप्यप्रकारकाद्व्याप्ये च संयोगावच्छिन्नाधेयतया पक्षप्रकारकाज्ज्ञानान्नेष्यत एवानुमितिरपि तु संयोगमात्रेण तदेकतरांशेऽपरप्रकारकज्ञानादेवेति वाच्यम्। एवमपि यत्राधरत्वादिरेव व्याप्यताघटकसम्बन्धस्तत्रोक्तज्ञानादनुमित्यापत्तेर्दुर्व्वारत्वात्। अथ संयोगो यत्र हेतुतावच्छेदकसम्बन्धस्तत्रैव व्याप्य-पक्षोभयवैशिष्ट्यावगाहित्वेन हेतुता

त्वीक्रियते न तु संयोगावच्छिन्नाधारतादिर्यत्र हेतुतावच्छेदकसम्बन्धस्तत्रापि, तत्र (१) तेन सम्बन्धेन हेतुप्रकारक-पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुतया तादृशपरामर्शत्वस्यैव जनकतावच्छेदकत्वोपगमात् । न हि तत्र संयोगावच्छिन्नाधेयतासम्बन्धेन व्याप्यांशे पक्षप्रकारकभानमपि हेतुः, तस्य हेतुतावच्छेदकसम्बन्धानवगाहित्वात् तद्धेतुत्वे उक्तरूपेण तत्संग्रहासम्भवाच्च इति चेत्तर्हि संयोगो यत्र हेतुतावच्छेदकसम्बन्धस्तत्रापि तेन सम्बन्धेन हेतुप्रकारक एव परामर्शो हेतुर्न तु तेन सम्बन्धेन पक्षप्रकारकोऽपि, तथा सति हेतुनिष्ठे साध्यशून्येऽपि द्रव्ये हेतुविशेष्यक-तद्द्रव्यप्रकारकयथार्थपरामर्शादनुमित्यापत्तेः सल्लिङ्गकपरामर्शाद्बाधितार्थविषयकत्वावज्ञानादिरूपदोषासमवहितात् भ्रमानुमित्युत्पत्तेः सर्व्वानुभवविरुद्धतया इष्टापत्त्ययोगात्, तथाच तत्रापि (२) उक्तानुगतरूपेण हेतुता न युज्यत इति क्व तथा हेतुत्वम् । न चसाध्यशून्ये हेतुसंयोगसत्त्वे तेन सम्बन्धेन व्याप्तिरेव बाधितेति कथमुक्तस्थले प्रसञ्जितभ्रमानुमितिजनकस्य परामर्शस्य यथार्थता इति वाच्यम् । हेतुसंयोगिन्यपि हेतुवृत्तिद्रव्ये हेतुसंयोगानुयोगित्वविरहेण तत्र साध्याभावस्य व्याप्त्यविघटकत्वात् अन्यथा संयोगेन तद्घटादेस्तद्घटान्यत्वाद्यव्याप्यताप्रसङ्गात् साध्याभाववति तद्घटादौ तद्घटादिसंयोगसत्त्वात् । अत्र वदन्ति धूमवान् पर्व्वतः धूमः पर्व्वते इत्युभयत्रैव संयोगः सम्बन्धतया भासते न तु संयोगावच्छिन्ना-

(१) 'तत्र' आधारतादिसम्बन्धेन हेतुतास्थले इत्यर्थः ।

(२) संयोगमात्रेण हेतुतास्थलेऽपीत्यर्थः ।

धारत्वाधेयत्वे, तथा सति संयोगस्य सम्बन्धताविलोपप्रसङ्गात्। एवञ्च तादृशज्ञानयोर्विषयतावैलक्षण्येन मिथो वैलक्षण्येऽपि धूमवान् पर्व्वतः धूमे पर्व्वत इत्यनयोः पर्व्वतवान् धूमः पर्व्वते धूम इत्यनयोश्चाविशेषप्रसङ्गात् तस्माद्धूमवान् पर्व्वत इत्यत्र धूमः पर्व्वते इत्यत्र च सम्बन्धस्य सम्बन्धविषया धूमे प्रतियोगित्वं पर्व्वते चानुयोगित्वं भासत इत्युपेयं, धूमे पर्व्वतः पर्व्वतवान् धूमः इत्यनयोश्च धूमेऽनुयोगित्वं पर्व्वते प्रतियोगित्वं भासत इति ताभ्यां विशेषः। न च विशेषणस्यानुयोगित्वभाने विशेष्यस्य च प्रतियोगित्वभाने विशेषण-विशेष्यभाववैपरीत्यप्रसङ्ग इति वाच्यम्। यतो विशेषणत्व-विशेष्यत्वे न भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वे, अपि तु विषयताविशेषावेव इत्याशयेन ग्रन्थकृता उक्तानुगमकरूपस्य कारणतावच्छेदकत्वमङ्गीकृतं, तथाच व्याप्यांशे सम्बन्धस्य प्रतियोगित्वं पक्षे चानुयोगित्वमवगाहमानतैव व्याप्य-पक्षोभयवैशिष्ट्यावगाहितेति। वस्तुतः सम्बन्धानुयोगिनि सम्बन्धप्रतियोगिनस्तेन सम्बन्धेन विशिष्टबुद्धिः प्रमा धूम-पर्व्वतसंयोगस्य धूम-पर्व्वतयोः प्रतियोग्यनुयोगिभावो न विपरीतयोरिति पर्व्वतवान् धूम इति ज्ञानस्याधारतानवगाहित्वेऽपि न प्रमात्वप्रसङ्ग इति संयोगमात्रस्यैव सम्बन्धत्वं न त्वाधारत्वस्याधिकस्य, तस्यापि सम्बन्धत्वानुपपत्त्या द्विष्ठतायाः स्वीकरणीयतया विशेषण-विशेष्ययोः तदीयप्रतियोगित्वानुयोगित्वयोः प्रमात्वनियामकतां विना भवतोऽप्यतिप्रसङ्गस्य दुर्व्वारत्वात्। सम्बन्धविशेषानुयोगित्वमेवाधारत्वमिति चेद्भवतु तथापि स्वरूपसत एव तस्य प्रमात्वनियामकतया न

तस्य सम्बन्धिसम्बन्धतेति। अत्र वदन्ति संयोगमात्रस्य सम्बन्धत्वे पर्व्वतवान् धूमः पर्व्वते धूम इत्यनयोः को विशेषः, आद्ये धूमांशे पक्षस्य संयोगः सम्बन्धः परत्र च पक्षसंयोगस्य प्रतियोगित्वं तथेति चेत्, आद्ये संयोगानुयोगित्वं सम्बन्धः परत्र च संयोग एव पक्षस्य तथेत्येव किं न स्यात्, अनुयोगित्वान्यसम्बन्धस्थले विशेष्ये प्रतियोगित्वस्यापि प्रमात्वनियामकताया वक्तुं शक्यत्वात् शब्दानुगमस्यानपेक्षणीयत्वात् तस्माद्यत्र संयोग एव सम्बन्धस्तत्र प्रतियोग्यनुयोगिभावो धर्म्म-धर्म्मिणोस्तत्सम्बन्धतया भासत इत्युपगम्यैव उक्तप्रत्यययोर्वैलक्षण्यमुपेयम् आधाराधेयभावस्य तुल्यवित्तिवेद्यताप्रवादोऽप्येवं सङ्गच्छते (१)। तथाच व्याप्यांशे सम्बन्धस्य प्रतियोगित्वं पक्षांशे चानुयोगित्वमवगाहमानतैव व्याप्य-पक्षवैशिष्ट्यावगाहितेति न कश्चिदतिप्रसङ्गः। इदन्तु तत्त्वं, तद्वानयमित्यत्र विशेष्ये विशेषणस्य संयोग एव सम्बन्धः, तत्रेदम् इत्यत्र च संयोगावच्छिन्नाधेयत्वमित्येव विशेषः, प्रथमे संयोगावच्छिन्नाधारत्वं परत्र च संयोगमात्रं सम्बन्ध इति वैपरीत्यस्य न प्रसक्तिः। विशेष्ये सम्बन्धानुयोगितायाः प्रमात्वनियामकतया धूमे पर्व्वत इत्यादिबुद्धेः प्रमात्वापातात्, एवञ्च सम्बन्धविधया भासमानसंयोगादेः प्रतियोगित्वानुयोगित्वभानमप्रामाणिकम्। एवञ्च पक्षविशेष्यकपरामर्श एवानुमितिहेतुर्न पर इत्यत्र विनिगमकमपि सुलभं व्याप्यविशेष्यकपरामर्शस्य संयोगावच्छिन्नाधेयतासंसर्गकत्वेनैव हेतुताया वाच्यतया तदपेक्षया पक्षविशेष्यक-

(१) अथेत्यादिः सङ्गच्छते इत्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

धियः संयोगसंसर्गकत्वेन (१) हेतुत्वे लाघवादिति। हेतु-साध्य-सामानाधिकरण्याघटितत्वेन मूलोक्तव्याप्त्यपेक्षया व्यापकत्वस्य लाघवं निराकर्त्तुं व्यापकत्वे तन्निवेशयितुमाशङ्कते, 'अथेति, 'तच्च स्वप्रतियोग्यनधिकरणवृत्तित्वमिति, स्वं वृत्तित्वान्तविशेष्यतया विवक्षितोऽभावः, स्वप्रतियोग्यधिकरणवृत्तिर्यो यस्तदन्यत्वनिवेशे संयोगि सत्त्वादित्यदावतिव्याप्तिरिति भावः। धर्म्ममात्रस्य व्यापकत्वं येन येन सम्बन्धेन यद्यत् क्वचिदपि सम्बद्धं तेन तेन सम्बन्धेन तत्तत् प्रति येन येन सम्बन्धेन स्वमवृत्ति तेन तेन सम्बन्धेन व्यापकत्वं, 'तादृशेति प्रतियोग्यनधिकरणवृत्तीत्यर्थः, गगनादेर्हेतुमन्निष्ठस्वाभावप्रतियोगित्वमकिञ्चित्करमित्याह, 'तदधिकरणेति, 'तदधिकरणं' गगनाद्यधिकरणं, 'तदभावस्य' गगनाभावस्य, 'तद्-व्यावृत्तये' उक्तापत्तिवारणाय, हेतुसामानाधिकरण्यं व्यापकताघटकं वाच्यम्। 'न चैवम्' एवञ्च न, समाधत्ते, 'अस्तु तावदिति, 'एवं' गगनाद्यभावस्य प्रतियोग्यसामानाधिकरण्यविशेषणेन व्यावृत्तिः, वस्तुगत्या उभयाभावघटितस्य प्रतियोग्यसामानाधिकरण्यस्य गगनाद्यभावसाधारणतया व्याप्तिवादे दर्शितत्वान्न तद्व्यावृत्तिरित्यभिप्रेत्य उक्तम् 'आपातत इति, 'वृत्तिमत्त्वं' व्यापकताघटकसम्बन्धेन सम्बन्धित्वं, न तु तेन सम्बन्धेन हेतुसामानाधिकरण्यपर्य्यन्तमिति शेषः। हेतु-साध्ययोरसामानाधिकरण्यज्ञानं जनकज्ञानविघटकत्वेनैवानुमितिविरोधि तच्च तदैवोपपद्यते यदि तयोः सामानाधिकरण्यज्ञानम् अनुमितिजनकं भवतीति शङ्कते, 'न चैवमिति, 'एवं'

(१) संयोगविषयकत्वेनैवेति पा०।

हेतु-साध्यसामानाधिकरण्यज्ञानस्याहेतुत्वे। 'पक्षधर्म्मत्वाग्रहे' तद-ग्रहदशायां, 'परामर्शविरहात्', पक्षधर्म्मतया हेत्ववगाहि-तद्व्याप-कताज्ञानरूपानुमितिकारणविरहेण तदापत्त्ययोगात्, 'तद्ग्रहे' तद्ग्रहदशायां, 'साध्यासमानाधिकरणधर्म्मान्तरग्रहस्येवेति साध्या-समानाधिकरणतया निश्चितजलत्वादौ पक्षधर्म्मताग्रहस्येवेत्यर्थः, 'तस्यापि' प्रकृतहेतौ पक्षधर्म्मताग्रहस्यापि, 'विरोधित्वात्' तदद-वृत्तित्वस्य तदभावव्याप्तिपर्य्यवसिततया साक्षादेवानुमितिविरोधि-त्वात्, साध्यवदवृत्तितया धर्म्मान्तरस्य ग्रहो न साध्याभावव्याप्तित्वेन तद्व्याप्तिविषयक इति तद्विषयधर्म्मान्तरस्य पक्षे ग्रहेऽप्यनुमिति-रिष्यत एवेति यदि तदा प्रकृतेऽपि तुल्यमित्याह, 'अन्यथेति, एतन्मते च विरोधः साध्याभावव्याप्यत्वं, असाधारण्यञ्चावृत्तित्वं, गगनादेरेव अनुकूलतर्कविरहेणासाधारण्यसन्देहादेव शब्दत्वादिकं शब्दादौ नित्यत्वाद्यसाधकमित्यवधेयम्। अस्तु हेतौ साध्य-वदवृत्तित्वग्रहसहितः पक्षधर्म्मताग्रहो विरोधिधर्म्मवत्ताज्ञान-विधया साक्षादनुमितिविरोधी तथापि साध्ये हेत्वसामानाधि-करण्याग्रहकाले अनुमित्यापत्तेर्दुर्व्वारतया साध्ये हेतुसामाना-धिकरण्यधीरनुमितिहेतुरवश्यमेव वाच्येत्यत आह, 'पर्व्वत इति, 'इति ज्ञानेन तुल्ययोगक्षेममिति, 'ज्ञानमिति, प्रथमज्ञान-काले (१) अनुमित्यनुत्पादे ग्राह्यविरोधितया गृह्यमाणधर्म्म-ग्रहस्येव ग्राह्यं यद्विरोधितया गृहीतं तद्धर्म्मग्रहस्याप्यनुमितौ

---

(१) पर्व्वतो वह्निव्याप्यधूमवान् पाषाणमयः पाषाणमयावृत्तिश्च वह्निरिति ज्ञानकाले इत्यर्थः।

साक्षाद्विरोधितया द्वयोरेव तथात्वं, तदा अनुमित्युपगमे च प्रकृतेऽप्यनुमितिरिष्यत एवेत्यर्थः, साध्य-हेत्वोरसामानाधिकरण्यग्रहात् कदाचिदनुमित्यनुत्पादानुभवश्चासामानाधिकरण्यस्याव्यापकत्वव्याप्यतया तद्ग्रहदशायामसामानाधिकरण्यग्रहस्य व्यापकताधीविरोधित्वादिति भावः। व्याप्ति-व्यापकतयोः साम्याय व्याप्तावपि न साध्य-हेत्वोः सामानाधिकरण्यान्तर्भाव इति शङ्कते, 'न चेत्यादिना, 'साध्येति साध्यतावच्छेदकावच्छिन्नाप्रतियोगिक-स्वावच्छिन्नसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकयावद--भावकधर्म्मवत्त्वमित्यर्थः, साध्यतावच्छेदकानवच्छिन्नस्वावच्छिन्नसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नयावत्प्रतियोगिताकधर्म्मवत्त्वमिति तु परमार्थः (१) अतो वह्निमान् धूमादित्यादौ हेतुमन्निष्ठस्य संयोगेन गुणाद्यभावस्य स्वरूपसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाभावसमनियततया तदभावाभिन्नत्वेऽपि न क्षतिः, अभावैक्येऽपि प्रतियोगिताभेदात्। यावदर्थस्य लघोर्दुर्व्वचत्वमाशङ्क्याह, 'साध्याप्रतियोगिकत्वेति अत्रापि साध्यतावच्छेदकानवच्छिन्नत्वावच्छेदकत्वविशिष्टसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितात्वक--त्वमिति पर्य्यवसितोऽर्थः (२), अवच्छेदकत्वञ्चेदं स्वरूपसम्बन्धात्मकमनतिप्रसक्तत्वनियतं इत्यभिमानः। बहुव्रीह्यर्थः सम्बन्धः उभयत्रैव यः कश्चन सम्बन्धत्वेन सम्बन्धविधया प्रविष्टः, प्रमेय-

(१) इति तु फलितार्थ इति पा०।

(२) इति फलितार्थ इति पा०।

सामान्यसाध्यकस्थले अन्योन्याभावेऽपि न साध्यतावच्छेदकावच्छि-न्नप्रतियोगिताकत्वप्रसिद्धिरतः 'सम्बन्धविशेषावच्छिन्नात्यन्ताभावे वेति संयोगादिसम्बन्धावच्छिन्नाभावे वेत्यर्थः । प्रथमे गौरवं प्रकाशयति, 'व्यापकत्वाद्यनन्तर्भावेनेति, तथाच तदन्तर्भाव आवश्यक इति भावः । द्वितीये गौरवं प्रकाशयति, 'प्रमाणाभावेनेति, प्रतियोगित्वादिभिरेव समं अनतिप्रसक्तधर्म्मस्य स्वरूपसम्बन्धात्मकावच्छेद्यावच्छेदकभावस्यानुभविकत्वादिति भावः । 'अनतिरिक्तवृत्तित्वपर्य्यवसायित्वात्' अनतिरिक्तवृत्तित्वरूपत्वात् । ननु व्यापकतायामपि स्वसमानाधिकरणाभावीययत्किञ्चित्प्रतियोगिकत्वाद्यभावमादाय अतिप्रसङ्गवारणाय यावत्तदभावकूटो निवेश्य इति यावत्त्वनिवेशस्तुल्य इत्यत आह, 'व्यापकतायाञ्चेति, 'प्रतियोगित्वादेरित्यादिना निष्कृष्टलक्षण(१)घटकतदवच्छेदकत्वपरिग्रहः, 'सामान्याभावस्य' तादृशप्रतियोगितात्वाद्यवच्छिन्नाभावस्य, इदन्त्वावच्छिन्नत्वं प्रतियोगित्वे सर्व्वमत एव स्वरूपसम्बन्धः न तु व्यापकत्वं, अन्यथा (२) दर्शितव्याप्तिलक्षणप्रविष्टसाध्यप्रतियोगिकत्वसामान्याभावस्यापि व्यापकतान्तरघटिततया महागौरवापत्तेरित्याह, 'सम्बन्धादिनिष्ठेति, 'आदिपदं सम्बन्धान्तरावच्छिन्नाभावपरिग्राहकं सम्बन्धप्रतियोगित्वाभावप्रतियोगित्वयोर्वैलक्षण्येऽप्यतिप्रसङ्गस्य दुर्व्वारताव्यञ्जकं, 'तस्य' सामान्याभावस्य, स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकत्वाभिधानेऽपि

---

(१) अनवच्छेदकत्वघटितलक्षणेत्यर्थः ।

(२) अवच्छिन्नत्वस्य व्यापकत्वरूपत्व इत्यर्थः ।

तादृशसाध्यतावच्छेदकीयसम्बन्धस्याधिकस्य हेतोर्द्विधा विषयतायाश्च कारणतावच्छेदके निवेशनीयतया व्याप्यवत्तापरामर्शहेतुतागौरवं दुष्परिहरमेवेति भावः। व्यापकसामानाधिकरण्यरूपव्याप्तिधीहेतुतामतेऽपि व्यापकताप्रदर्शकोदाहरणप्रयोगसङ्गतिरतएवेत्याद्युपष्टम्भासङ्गतिरत आह, 'साधनेति।

---

तत्त्वचिन्तामणिः।

अतएव यो यो धूमवान् सोऽग्निमानित्युदाहरणवाक्ये साध्यायोगव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते अन्यथा वह्निमानेव धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात् दोषोऽपि व्यभिचारादिर्न पक्षधर्म्मव्यापकं साध्यमित्येवोद्भाव्यः।

---

दीधितिः।

तद्धेतुतावादिनं निरस्यति, 'अतएवेत्यादिना। वीप्सासमभिव्याहारादिवशादुद्देश्यधर्म्मवद्वृत्तेरत्यन्ताभावस्यान्योन्याभावस्य वा प्रतियोगित्वाभावो विधेयधर्म्मे तद्वति वा भासते, न तु विधेयधर्म्म-तद्वतोरत्यन्तान्योन्याभावानधिकरणत्वमुद्देश्यधर्म्मवति, यद्यदभिधेयं तत्प्रमेयमित्यादावसम्भवादिति भावः। 'साध्येति, 'अयोगः' अभावप्रतियोगित्वं, तथाच साध्ये साधनवन्निष्ठाभाव-

प्रतियोगित्वव्यवच्छेदेनेत्यर्थः । 'स्यादिति, न स्याच्च केवलान्वय्यनुमानमित्यपि द्रष्टव्यम् । 'न पचेति, एतच्च विरोधस्यातिस्फुटत्वमभिसन्धाय, साध्याभाववद्वृत्ति-त्वबुद्धेरपि व्यापकताधीविरोधित्वादिति वदन्ति ।

---

गादाधरी विवृतिः ।

ननु वीप्सावशात् उद्देश्यधर्म्मधूमादौ विधेयवह्निमदन्या-वृत्तित्वमेव प्रतीयते, न तु विधेयधर्म्मे उद्देश्यगतधर्म्मव्यापकत्वं इत्युपेयमतो न साध्यवदन्यावृत्तित्वज्ञानहेतुतामतेऽप्युक्तोदाहरणा-सङ्गतिरित्यत आह, 'वीप्सेति, 'वीप्सासमभिव्याहारः' वीप्सितपद-समभिव्याहारः, 'उद्देश्यधर्म्मः' उद्देश्यगतधर्म्मः, स च वीप्सितयत्पदेत-रोद्देश्यवाचकपदघटितवाक्ये ग्रामो ग्रामो रमणीय इत्यादौ तत्प-दोपस्थाप्यो ग्रामत्वादिरूपोद्देश्यतावच्छेदकधर्म्मः, एवं यत्पदवीप्सा-स्थले यो यो धूमवानित्यादौ तु यत्पदार्थविधेयतया विवक्षितो-धूमादिः तस्यापि यत्तद्घटितवाक्यद्वयोद्देश्यधर्म्मिसम्बद्धतया विव-क्षितत्वात् । अन्योन्याभावघटितव्यापकताया लघुत्वादन्योन्या-भावस्य चरममुपादानं, 'प्रतियोगित्वाभावः' प्रतियोगितानवच्छे-दकावच्छिन्नत्वं, 'विधेयधर्म्मे' विधेयकोटिनिविष्टधर्म्मे, स च धर्म्मो-ग्रामो ग्रामो रमणीय इत्यादौ यथायोगं द्विरुक्तोद्देश्यवाचकपद-समभिव्याहृतपदोपस्थाप्यो विधेयतावच्छेदकरमणीयत्वादिः विधेयो-रमणीयाभेदादिश्च, यो यो धूमवान् स वह्निमान् स न ह्रद-इत्यादौ च वीप्सितपदघटितवाक्यान्तरस्थपदोपस्थाप्यो वह्न्यादि-

रूपविधेयतावच्छेदको ऋदभेदादिरूपो विधेयस्य विधेयधर्म्म-तद्वतो-रत्यन्तान्योन्याभावप्रतियोगित्वाभ्यां यथासंख्यमन्वयः। उद्देश्य-विधेयधर्म्मौ वीप्सितपदघटितवाक्योपस्थाप्योद्देश्यतावच्छेदक-विधेयावित्यपव्याख्यानं, यो यो धूमवान् स वह्निमानित्यादौ धूम-वह्न्याद्योर्विभिन्नवाक्योपस्थाप्ययोर्यत्तत्पदार्थांशे विधेयत्वात्, धूमादेर्वह्न्याद्युद्देश्यतावच्छेदकत्वविरहात्।

यत्तु यत्तत्पदयोस्तात्पर्य्यग्राहकत्वमेव, धूमवान् वह्निमानित्यनयोरेवोद्देश्य-विधेयभावेनान्वय इति, तदशुद्धं, यो य इच्छति स जानाति इत्यादावाख्यातार्थस्य व्युत्पत्तिविरोधेन धर्म्मानुपस्थित्या च उद्देश्यतावच्छेदकत्वासम्भवात्। यत्पदाभ्यां विरूपेणोपस्थितयोरपि तत्पदेन परामर्शादिति मणिकारलिखनविरोधाच्च। एतेन पूर्व्ववाक्यमेव निरर्थकं उत्तरवाक्यस्थतत्पदं धूमाद्यवच्छिन्नपरमित्यपि निरस्तम्। अप्रक्रान्तस्य तत्पदेन परामर्शायोगाच्च। 'विधेयधर्म्म तद्वतोरत्यन्तान्योन्याभावाभ्यां यथासंख्यमन्वयः। 'उद्देश्यधर्म्मवतीति 'न तु भासते' इत्यनेनान्वयः। धूमवति वह्नि-तद्वतोरत्यन्तान्योन्याभावानधिकरणत्वभाने अर्थाद्धूमे वह्निमदन्याधिकरणकत्वाभावरूपव्याप्तिलाभः सम्भवतीति न परानभिमतप्रतिक्षेपशङ्का। अतएव 'वह्निमानेव धूमवानित्यादिमूलस्यापि सङ्गतिः, वह्निमदन्यतादात्म्यव्यवच्छेदवत्त्वेन धूमवत एव तादृशवाक्यात् प्रतीतेः। 'असम्भवादिति विधेयधर्म्माद्यभावाप्रसिद्धेरित्यर्थः। इदमत्रावधेयम्, ग्रामो ग्रामो रमणीय इत्यादौ ग्रामत्वव्यापकत्वविशिष्टाभेदादेरुद्देश्ये रमणीयादिसम्बन्धत्वोपगमाद्व्यापकताबोध-

निर्व्वाहः, व्यापकत्वस्यापदार्थत्वेन प्रकारत्वायोगात् । न च द्विरुक्त-ग्रामपदं ग्रामत्वव्यापकताविशिष्टार्थकं तस्य चाभेदसम्बन्धेन विधेयान्वयः शक्तिग्राहकन्तु द्विरुक्तानुशासनमेवेति वाच्यम् । तथा सति उद्देश्यतया ग्रामादीनामन्वयानुपपत्तेः स्वातन्त्र्येणा-नुपस्थितत्वात् । न चैकग्रामपदं उद्देश्यवाचकमपरञ्चोक्तार्थक-मिति वाच्यम् । एकपदस्थाने उभयात्मकपदद्वयादेशात् (१) पद-द्वयस्यैवाभावात्, द्वितीयाद्यर्थकर्म्मत्वादौ प्रकृत्यर्थस्याधेयतयैव अन्वयस्य व्युत्पन्नतया ग्रामं ग्रामं ददातीत्यादौ वीप्सितपदस्य व्यापकतार्थकत्वे व्यापकादिकर्म्मकदानादेः प्रत्ययापत्तेश्च । न चोद्देश्य-विधेयभावस्थले वीप्सां विनापि उद्देश्यतावच्छेदका-वच्छेदेन विधेयभानाद्व्यापकताबोधार्थं द्विरुक्तप्रयोगो व्यर्थं एव यदि व्यापकताया न प्रकारतेति वाच्यम् । उद्देश्यतावच्छेदकसामा-नाधिकरण्यमात्रेणापि क्वचिद्विधेयबोधाद्व्यापकतापरत्वस्फुटीकर-णाय द्विरुक्त्यादरात् । अस्तु वा रमनीयादिपदस्यैव ग्रामत्वव्यापक-रमणीयत्वादिना निरूढ़लक्षणा निरूढ़लक्षणाया द्विरुक्तोद्देश्य-वाचकपदसमभिव्याहारनियतत्वान्न तन्निर्व्वचनवैयर्थ्यं, ग्रामं ग्रामं ददातीत्यादौ कर्म्मत्वादिरूपविधेयवाचकविभक्तेस्तु न लक्षणा सम्भवति सुविभक्तित्वादतस्तत्र व्यापकत्वं सम्बन्ध एव, दान-कर्म्मतात्वादिना कर्म्मत्वादेरनुपस्थितावपि तद्रूपावच्छिन्नव्यापकत्वं कर्म्मत्वादौ ग्रामादेः सम्बन्धः न तु शुद्धकर्म्मतात्वावच्छिन्नं अति-प्रसङ्गात् । यो यो धूमवान् स वह्निमान् इत्यादौ तु द्विरुक्त-

(१) समुदायादेशादिति पा० ।

यत्पदस्य व्यापकत्वमर्थः, तत्र प्रतियोगित्वेन धूमस्यानुयोगित्वेन वह्नेरन्वय इति प्रलपितमपि तुच्छं, नामार्थयोर्भेदान्वयायोगात् यत्पदस्य धूमवत्पदसामानाधिकरण्याभावेन सामान्यतया न पुंस-कतापत्तेः, यत्र यत्र धूम इत्यादौ आधारत्वरूपार्थानन्वयेन सप्तम्यनुपपत्तेश्च। यो यो धूमवानित्यादौ तु वह्न्यादिपदस्य धूमव्यापकवह्नित्वादिना निरूढ़लक्षणैव उद्देश्यतावच्छेदकस्य व्याप-कताया एव विधेयसंसर्गघटकतया भानस्य प्रामाणिकतया पूर्व्वोक्तयुक्त्या च तत्र धूमादेरुद्देश्यतावच्छेदकताविरहेण तद्व्याप-कतायाः संसर्गघटकत्वासम्भवात्।

प्राञ्चस्तु वीप्सास्थले व्यापकताया न शाब्दधीः किन्तु द्विरुक्त-ग्रामादिपदाद्ग्रामत्वादिना उपस्थितेषु सकलग्रामादिषु, द्विरुक्त-यत्पदाच्च महानसत्व-महानसान्यत्वादिना उपस्थितेषु, तत्पदेन च तेन तेन रूपेण परामृष्टेषु सकलधूमादिमत्सु विधेयसम्बन्धः शब्दात् प्रतीयते, तावता क्वचिदपि व्याप्याधिकरणे व्यापकाभाव-शङ्काया अभावात् (१) व्यभिचारज्ञानाभावसहकृतसहचारदर्शन-सत्त्वात्, तदुत्तरकालं मानस एव व्यापकताबोधः 'सकृदुच्चरिते-त्यादिनियमस्य प्रामाणिकत्वेऽगत्या तस्य सङ्कोचः। अथ तादृश-नियमासत्त्वे द्विरुक्तवैयर्थ्यमिति चेन्न, सकलव्यक्तिपरत्वग्राहकतया तदुपयोगात् यो य इत्यस्य पदद्वयक्रमेण महानस-चत्वरादि-रूपधर्मिद्वयमात्रपरत्वभ्रमसम्भवादतिस्फुटत्वाय न्यायातिरिक्तस्थले

(१) असम्भवात् इति पा०।

तत्पदेऽपि वीप्सा दृश्यते एकतत्पदेनापि धर्म्मिद्वयपरामर्शसम्भवात्तन्मात्रपरत्वे तत्पदान्तरवैयर्थ्यमिति प्रतिसन्धानेन तादृशभ्रमनिवृत्तिसम्भवात्, एकदा यावद्व्यक्तिप्रत्यायनेच्छैव वीप्सापदार्थः, युगपद्व्याप्तुमिच्छा वीप्सा इत्यभियुक्तोक्तेर्वारणात्, न तु व्यापकत्वप्रत्यायनेच्छा युगपदित्यस्य वैयर्थ्यापत्तेः। यो यो धूमवानित्यादौ यत्पदार्थव्यापकत्वाबोधात् यत्पदे द्विर्वचनानुपपत्तेश्चेत्याहुः। अत्र व्यापकतायाः शाब्दबोधानुपगमे यत्पदेन महानसत्वादिना सकलव्यक्तिषु वह्न्यादिमत्ताबोधेऽपि धूमादिमत्त्वेन तेष्वेव वह्न्याद्यभाववत्त्वशङ्कासम्भवान्न मनसा व्यापकतानिश्चयः सम्भवतीत्यनुपपत्तिः समानविषयकत्वमात्रेण विरोधिताव्यवस्थापनमन्तरेण दुर्व्वारैवेति चिन्त्यम्।

साध्यायोगव्यवच्छेदपदेन व्यापकतालाभार्थं व्याचष्टे, 'अयोग-इति, 'अभावप्रतियोगित्वं' हेतुमन्निष्ठाभावप्रतियोगित्वं, विरोध्यर्थकनञा तदधिकरणयोगविरोधिनोऽयोगपदार्थत्वं बोध्यत इत्यभिप्रायः। साध्यस्यायोगान्वये तन्निष्ठव्यापकत्वालाभाद्व्यवच्छेदान्वयितया व्याचष्टे, 'तथा चेति, 'व्यवच्छेदेनेति व्यापकतान्वयी अभेदस्तृतीयार्थः, न्यूनताभङ्गाय साध्यवदन्यावृत्तित्वधीहेतुतायां (१) केवलान्वय्यनुमानानुपपत्तिदोषमपि दर्शयति, 'न स्याच्चेति। हेतौ साध्यप्रतियोगिकाभावसामानाधिकरण्यरूपव्यभिचारधियः साध्ये हेतुमन्निष्ठाभावप्रतियोगित्वविषयकतया समानविषयकत्वेन विरोधितामते व्यापकताधीविरोधित्वमावश्यकमिति हेतुः

(१) साध्यवदन्यावृत्तित्वधीहेतुतामत इति पा०।

साध्यव्यभिचारीत्युद्भावनस्यापि युक्तत्वाद्दोषोऽपीत्यादिमूलासङ्गति-रत आह, 'एतच्चेति, 'विरोधस्य' व्यापकताधीप्रतिबन्धक-त्वस्य (१) 'अतिस्फुटत्वं' सर्व्ववादिसिद्धत्वं, 'अभिसन्धाय', न तु हेतुधर्म्मिकव्यभिचारधियोऽविरोधित्वम्, अतैव हेतुमाह, 'साध्या-भावेति, समानविषयत्वेन विरोधितामतमवलम्ब्येति भावः। स्वयं समानप्रकारकधिय एव विरोधित्वोपगमाद्वदन्तीति।

---

तत्त्वचिन्तामणिः।

अथ पर्व्वतवृत्तिधूमव्यापको वह्निरिति परामर्शो यदि तदा पर्व्वतीयधूमं प्रति व्यापकतायाः पर्व्वत-धूमसामानाधिकरण्यनैयत्यात् पर्व्वतवह्निः परामर्श-विषय एवेति किमनुमेयमिति चेत्, तर्हि पर्व्वतीय-धूमे नियतसाध्यसामानाधिकरण्यस्य व्याप्यत्वस्य भानं साध्यसामानाधिकरण्यभाननियतमिति व्याप्यत्वभाने-ऽपि तुल्यम्। यदि च स्मृता व्याप्तिर्धूमेऽवगम्यते तदा व्यापकत्वेऽपि समानं। वस्तुतस्तु व्यापकत्वं तद्-वन्निष्ठात्यन्ताभावाप्रतियोगित्वं न तु धूमसामानाधि-करण्यं, व्याप्यत्वन्तु सामानाधिकरण्यविशेष इति तवैवानुमितिरफला स्यात्। न चैवं परामर्शस्य

---

(१) 'विरोधस्य' अव्यापकताधियो व्यापकताधीप्रतिरोधस्य, इति पा०।

चाक्षुषत्वं न स्याद्व्यापकस्य विशेष्यस्येन्द्रियासन्निकर्षा-दिति वाच्यम्। इष्टत्वात् असन्निकृष्टधूमादाविव मानस एव हि सर्व्वत्र परामर्शः, चक्षुरन्वय-व्यतिरेकानुविधानञ्च पक्षवृत्तिधूमोपनयोपक्षीणम्।

दीधितिः।

'मानस एवेति प्रायिकत्वाभिप्रायेण, तेन क्वचिच्छब्दादिना क्वचिच्च साध्येन्द्रियसन्निकर्षात् परामर्शेऽपि न क्षतिः, पक्षे साध्यसम्बन्धस्याग्रहात् ग्रहेऽप्यनुमित्साया अनुमितिसम्भवात्।

गादाधरी विवृतिः।

मूले 'किमनुमेयमिति सर्व्वत्र वास्तवपक्षीयसाध्यभानमेवानुमानफलमित्यभिमानेन, स्मृता व्याप्तिः पक्षतावच्छेदकविशिष्टे साध्यसम्बन्धमगृहीत्वैव धूमेऽवगम्यते पक्षतावच्छेदकानवच्छिन्नेऽपि पक्षे साध्यसम्बन्धग्रहादनुमानवैफल्ये वैपरीत्यमेव इत्याह, 'वस्तुतस्त्विति, 'न तु धूमसामानाधिकरण्यमिति, येन पर्व्वतीयधूमसामानाधिकरण्यस्य वह्नौ भाने तादृशधूमाधिकरणात्वसम्बन्धस्य तत्र भानमावश्यकमिति शङ्केतेति शेषः। 'मानसएव परामर्शइति योजना, सर्व्वत्र हेतुरिति शेषः। अत्र सर्व्वपदस्यानुमितिसामान्यार्थकत्वेऽसङ्गतिः साध्यविशेष्यकस्यापि परोक्षरूपस्य कदाचिच्चाक्षुषादिरूपस्य च परामर्शस्यानुमितिजनकत्वसम्भवादत-

आह, दीधितौ 'प्रायिकत्वाभिप्रायेणेति इन्द्रियासन्निकृष्टसाध्यकप्रत्यक्षपरामर्शजन्यानुमितिसामान्याभिप्रायेण इत्यर्थः, साध्येन्द्रियसन्निकर्षसत्त्वे प्रत्यक्षतः साध्यसिद्धेः कथं परामर्शेनानुमितिर्जननीयेत्याकाङ्क्षायां तदुपपादकं हेतुमाह, 'पक्ष इति ।

---

तत्त्वचिन्तामणिः ।

अथ जनकज्ञाने उपसर्ज्जनतया भातस्य पक्षस्य पर्व्वतादेरनुमितौ प्राधान्येन भानं न स्यात्, न हि जनकज्ञाने उपसर्ज्जनतयावगतं जन्यज्ञाने प्राधान्येन भासते, तथादर्शनात् । न चानुमितेस्तथात्वमसिद्धं पर्व्वतोऽयं वह्निमानित्यनुमितेर्लोकसिद्धत्वादिति चेन्न, पुरुषस्य दण्ड इति ज्ञानानन्तरं दण्डी पुरुष इति ज्ञानजन्यज्ञानदर्शनात् अन्यथा तवापि कथं पक्षविशेष्यकत्वनियमः, न हि कारणीभूतज्ञाने यद्विशेष्यतया भासते तत्कार्य्यीभूतेऽपि तथा, इह भूतले घटो नास्तीति ज्ञानजन्ये घटाभाववद्भूतलमितिज्ञाने तत्र च व्यभिचारात् तस्मात् पक्षवृत्तिलिङ्गपरामर्शस्यायं स्वभावो यत्स्वाश्रयविशिष्यिकामनुमितिं जनयति नातथाभूतामेवं ममापि तुल्यमिति ।

## अथ तत्त्वचिन्तामणि दीधितिः।

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य, तत् प्रसङ्गात्, तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च, तदाभासनिरूपणं प्रतिजानीते अथेति। अनुमितीति। यथाश्रुतमिदं हेतुदोषाणां लक्षणं। तद्वत्त्वञ्च दुष्टहेतूनां। तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति।

ॐ नमो गणेशाय।

हेत्वाभासनिरूपणे प्रसङ्गस्यापि* सङ्गतित्वं सम्भवति। व्याप्तिपक्षधर्म्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्म्मताविरोधितद्विरहविशिष्टस्य दुष्टहेतोः स्मरणात्†। अतस्तदप्रदर्शकमूलस्य न्यूनतां‡

---

* स्मृतमिष्टोपेक्षानर्हत्वावच्छेदकधर्म्म एव प्रसङ्गः। स च प्रकृते हेत्वाभासपदार्थत्वं। एवञ्च हेत्वाभासपदार्थत्वावान्तरधर्म्मप्रकारकजिज्ञासां प्रति सामान्यधर्म्मप्रकारकज्ञानस्य हेतुत्वेनानन्तराभिधान इत्यादि सङ्गतिलक्षणाक्रान्तत्वं हेत्वाभासपदार्थत्वस्येति बोध्यं।

† व्याप्तिपक्षधर्म्मताविरहे स्ववृत्तिव्याप्तिपक्षधर्म्मताविरहवत्त्वसम्बन्धस्य दुष्टहेतुवृत्तितालाभायान्यथा विशिष्टाभावमादाय सद्धेतावपि तत्सम्बन्धसत्वात् तथाच सम्बन्धिज्ञानं दुष्टहेतुमात्रवृत्तित्वसम्बन्धपुरस्कारेण सम्बन्ध्यन्तरस्मरणे हेतुः।

‡ तदकथन ज्ञानज्ञाप्यतदज्ञानवत्पुरुषोच्चरितत्वं।

परिजिहीर्षुः* प्रसङ्गस्यापि तन्निरूपणप्रयोजकत्वमाह एतावतेति†। परिकरो व्याप्तिपक्षधर्म्मतेति‡। निरूप्येत्यन्तं, उक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्व्वाहकस्य लाभाय। तत्प्रसङ्गादिति सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः। तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः। अन्वयश्चास्य निरूपणमित्यनेन।

तत्वनिर्णयविजय§प्रयोजकत्वादितिमूलं। यद्यपि हेत्वाभासनिष्ठतत्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरं। तथापि तन्मात्रपरत्वे सङ्गत्यप्रदर्शनेन मूलस्य न्यूनता स्यादिति तस्यैककार्य्यकारित्वरूपसङ्गतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्त्तुमाह त-

---

* परिहारश्चाज्ञानाभावसम्पादकव्यापारः।

† एतावताप्रबन्धेन अवयवनिरूपणान्तेन ग्रन्थेन। तृतीयार्थश्चाभेदः निरूप्य इत्यत्र निरूपणेऽन्वेति। निरूप्य इत्यन्तेन अथ शब्दोऽपि तत्तथाऽवसरोऽप्यत्र सङ्गतिः स्यादिति हृदयम्।

‡ भट्टाचार्य्यमते दुष्टहेतुत्वसामानाधिकरण्येन सङ्गतित्वं। तेनासङ्कीर्णबाधस्थले सत्प्रतिपक्षव्याप्तिपक्षधर्म्मताविरहवत्ताभावेपि न क्षतिरिति। जगदीशमते दुष्टहेतुत्वावच्छेदेन सङ्गतित्वं। अतएव व्याप्तिपक्षधर्म्मतादिरित्यादिपदेनाबाधितत्वासत्प्रतिपक्षितत्वयोरुपग्रहः। तेन व्याप्तिपक्षधर्म्मत्वविरहासत्वेप्यबाधितत्वविरहवत्वसत्वात् सङ्गतिः सम्भवति।

§ पराहंकारखण्डनं विजयः। अहंकारश्च, अहमुत्कृष्टइत्याकारकसंस्कारः; खण्डनं नाशानुकूलव्यापारः।

त्वनिर्णयादीति आदिपदाद्विजयपरिग्रहः। तत् कार्य्यकारित्वात्, सपरिकरहेतुप्रयोज्यकार्य्यप्रयोजकत्वात्। प्रयोजकत्वञ्च, जनकतावच्छेदकादिसाधारणमिति स्वविषयकज्ञानकार्य्यं प्रति स्वस्य तथात्वमक्षतमेव। तत्वनिर्णयः, प्रमितकोटिनिश्चयः। तत्र व्याप्ति पक्षधर्म्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते। प्रतिबन्धकीभूतविपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वादित्युभयोस्तत्वनिर्णयप्रयोजकत्वं। अथवा* तत्वनिर्णयः साध्यवत्ताज्ञाने प्रमात्वनिश्चयः। तत्रानुमापकहेतोर्व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव विपरीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते। प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघटकत्वात्। विजयप्रयोजकत्वञ्च, हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा। व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा बोध्यम्॥

मूलोक्तलक्षणानां † दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः। यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्य्यन्तस्य समूहालम्बनविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विव-

* तत्वपदस्य प्रामाण्यवाचकत्वात्, प्रमितकोटिनिश्चयार्थकत्वे लक्षणापत्तेरत आह अथवेति।

† स्वहेतुकानुमितिप्रतिबन्धकयथार्थज्ञानविषयीयत् स्वं तदुक्तौ न कोऽपि दोषः। स्वं प्रकृतहेतुपरं।

क्षणीयतया बाधादिज्ञानप्रतिबन्धकतायां प्रायशो* हेतुविषयताया अनवच्छेदकत्वात्, तत्र † हेतोरव्याप्तिश्च। यद्विषयकत्वेनेत्यादि-लक्षणे च तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथेत्यत आह यथाश्रुतमिति ‡। इदं एतल्लक्षणत्रयं। ननु हेतुवदाभासन्त इति-व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वाद्दुष्टहेतुनिरूपणस्यैव प्रति-ज्ञातत्वात्तल्लक्षणमेवाकाङ्क्षितमतस्तदनुक्तौ मूलस्य न्यूनता। अन्य-विधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेपि तेचेत्यादिना दुष्टहेतूनामेव विभजनाद्दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वे तदसङ्गतिः। एवं दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात् उपधेयसङ्करेपीत्यादि ग्रन्थस्योपाध्यसङ्करेण विभागोपपादनपरस्यासङ्गतिरित्यत आह तद्व-त्त्वञ्चेति। तादृशदोषवत्त्वञ्चेत्यर्थः। दुष्टहेतूनां लक्षणमित्यनुषज्यते स्फुटमिति शेषः। तथा च दुष्टहेतुनिरूपणस्य प्रकृतत्वेपि दोषल-क्षणे कृते तद्वत्त्वरूपदुष्टहेतुलक्षणस्य स्फुटतया लाभेन दोषलक्षणा-

---

* धूमोवह्निमान् धूमादित्याद्यनुमितौ बाधप्रतिबन्धकतायां हेतुविषयताया अवच्छेदकत्वात् प्रायश इत्युक्तं।

† तथाच गन्धप्रागभावावच्छिन्नघटोगन्धवान् पृथिवीत्वादित्याद्यसङ्कीर्णबाध स्थलेऽव्याप्तिरन्यत्र व्यभिचारादिज्ञानमादाय लक्षणसम्भवादिति भावः।

‡ अनुमितिप्रतिबन्धकयथार्थज्ञानविषयोयत्र इतिव्युत्पत्त्या दुष्टहेतुलक्षणत्व-स्य सम्भवतीत्यत उक्तं यथाश्रुतमिति।

भिधानस्य तत्र तात्पर्य्यात् नोक्तानुपपत्तिरितिभावः। तदभिप्रायेणैवेति * दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः।

**तत्रानुमितिपदं, अनुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरं, साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमिति परं वा।**

अनुमितिपदस्यानुमितिसामान्यपरत्वे† असम्भवात् यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गात् ‡। प्रकृतपक्षसाध्य § हेतुकानुमितिपरत्व मावश्यकं। तथा च व्यभिचारादावव्याप्तिः. वह्निर्धूमव्यभिचारीत्यादिज्ञानाभावस्य पर्व्वतोधूमवानित्यनुमित्यजनकत्वात्। लक्षणया

---

* अत्रेदं बोध्यं तदभिप्रायेणैव इत्यस्य दुष्टहेतुलक्षणाभिप्रायेणैव इत्यर्थकत्वे उपधेयसङ्करेपीत्यादि दूरग्रन्थसम्वादकथनमनुचितं ते चेत्यादि ग्रन्थसम्वादस्यैवोचितत्वात्। किन्तु दोषवत्त्वरूपदुष्टलक्षणाभिप्रायेणैवेत्यर्थोबोध्यः। तथा च दुष्टलक्षणकरणे तेचेत्यादिग्रन्थासङ्गतेरभावे उपधेयसङ्करेपीत्यादिग्रन्थस्यासङ्गतिः।

† असम्भवभिया अनुमितित्वव्यापकत्वनिवेशासम्भवेन अनुमितिनिष्ठप्रतिवध्यत्वनिवेशे पर्व्वतोवह्निमानित्यादौ घटाभाववद्भूतलादावतिव्याप्तिः। तस्यापि भूतलं घटवदित्यनुमितिप्रतिवन्धकत्वादित्यतआह अनुमितिपदस्येत्यादि।

‡ अनुमिति पदस्यानुमितिसामान्यपरत्वेऽतिप्रसङ्गादिति क्वचित् पाठः।

§ अत्र हेतुकत्वपदेन हेतुप्रकारकनिश्चयजन्यानुमितित्वलाभाद् वह्निव्याप्यमहानसीयवह्नीतरवह्न्यभाववान् पर्व्वत इत्याकारकनिश्चयोत्तरजायमानपर्व्वतो महानसीयवह्निमानित्यनुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिवन्धकताश्रयालिङ्गानविषयत्वात् महानसीयवह्न्यभाववत्पर्व्वतेऽव्याप्तिः।

तस्य तादृशानुमितिजनकज्ञानमात्रपरत्वेच बाधादावव्याप्तिः। बाधादिज्ञानस्य परामर्शाप्रतिबन्धकत्वात्। अतोऽनुमिति पदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे तत्रेति। तादृश लक्षणवाक्य इत्यर्थः। लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाहानुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनेति। अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्न-प्रकारक-प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति। अतोन वक्ष्यमाणातिप्रसङ्गः। निरूपकत्वञ्चात्र यदि प्रतियोगित्वं, तदा कार्य्यस्य कार्य्यताप्रतियोगित्वाभावादनुमित्यसंग्रहः, अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्*साक्षात्कारजनक†साक्षात्कारविषयतात्मक ‡ निरूपकत्वस्य लाभाय। अत्र पर्वतोवह्निमान्

---

* तत्पदं अनुमिति निष्ठकार्य्यता परम्।

† अनुमितिनिष्ठकार्य्यतासाक्षात्कारं प्रति अनुमितितत्कारणपरामर्शयोः साक्षात्कारोहेतुः सम्बन्धिद्वयनिरूपितपदार्थसाक्षात्कारं प्रति सम्बन्धिद्वयसाक्षात्कारोहेतुरित्यवश्यं वक्तव्यत्वात् अन्यथा घटभूतलसाक्षात्कारं विना तयोः संयोगसाक्षात्कारापत्तेः। एतत् सर्व्वं हृदिकृत्वाह ततसाक्षात्कारजनकेत्यादि।

‡ अत्र तादृशसाक्षात्कारजनकसाक्षात्कारविषयत्वं तादृशसाक्षात्कारजनकतावच्छेदकमुख्यविशेष्यताश्रयत्वं अतो न केवल पर्व्वतोवह्निमानित्यनुमितिविषयकसमूहालम्बनह्रदो वह्निमानित्यनुमितिविषयकसाक्षात्कारविषयत्वमादाय पर्व्वतपक्षकवह्न्यनुमितिस्थले वह्न्यभाववद्ध्रदादेर्दोषत्वापत्तिः। तथा यत्र स्थलविशेषे साध्यान्तरानुमितिः साध्यतावच्छेदके प्रविष्टा तत्र सर्व्वेषामेव दोषाणां तादृशानुमित्यप्रतिबन्धकतया प्रतिबध्यतायां तादृश ग्रहत्वव्यापकत्वनिवेशकल्पे तल्लक्षणासम्भवः। व्यापकत्वानिवेशे उदासीनघटादावतिव्याप्तिरित्यादिदूषणावकाश इति बोध्यम्।

ह्रदश्च तथेत्यादि समूहालम्बनानुमित्यादिविरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्गः। प्रकृतानुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धिग्रहत्वस्य कस्यापि प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशनासम्भवात् तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे च अनुमित्यविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाव्याप्तिः। उभयविरोधिपक्षाप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्वादतः कल्पान्तरमाह साध्यव्याप्येति। प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नतद्व्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः। एवञ्च तादृशसमूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारज्ञानादिप्रतिबध्यत्वान्न व्यभिचाराद्यसंग्रहः। ह्रदादौ वह्न्यादिविषयकसमूहालम्बनादिप्रतिबन्धकतामादाय दर्शितातिप्रसङ्गस्य वारणाय सामान्यपदं। तथा च तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्य्यवसितार्थः। एवञ्च साध्यतावच्छेदकावच्छिन्नादि प्रकारकानुमितिसामान्यान्तर्गतायां पर्व्वतोवह्निमान्वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ ह्रदोन वह्निमानित्यादिनिश्चयस्याप्रतिबन्धकत्वात्, बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः। द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ तथाविधनिश्चयस्याप्रतिबन्धकत्वात्तद्दोषतादवस्थ्यमतः

पक्षतावच्छेदकावच्छिन्नत्वोपादानं। अवच्छेदकत्वञ्च, तत्पर्य्याप्त्यधिकरणत्वं। तेनातेजस्वी पर्व्वतोवह्निमानित्यादौ विशिष्टपर्व्वतत्वादिमति वह्न्याद्यभावरूपवाधस्य, काञ्चनमयः पर्व्वतोवह्निमानित्यादौ च, आश्रयासिद्धेः शुद्धपर्व्वतत्वाद्यवच्छिन्नपक्षकानुमित्यविरोधित्वेपि नासंग्रहः; एवमग्रेपि वोध्यं। साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशे, परामर्शाविरोधितया वाधसत्प्रतिपक्षयोरव्याप्तिः। तत्र प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेपि तद्दोषतादवस्थ्यं। वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रदइत्याद्यनुमित्यप्रतिवन्धकत्वात्। साध्याप्रसिद्धाव्याप्तिवारणप्रयोजनकत्वोपवर्णनन्तु तदुपादानस्येति तु न सत्। वह्निर्न काञ्चनमय इत्यादिनिर्णयस्य पक्षे शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरोधित्वेपि, द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्वात्तस्य काञ्चनमयवह्निव्याप्यधूमवान् पर्व्वत इत्यनुमितिविरोधितया; तत्र लक्षणगमनात्। द्वितीयदलप्रवेशात् व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषु नाव्याप्तिः। तत्रापि साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनिवेशाद्व्यभिचारविरोधयो र्नाव्याप्तिः। वह्निर्धूमव्यभिचारीत्यादिज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्भानसम्भवात् तद्दोषतादवस्थ्यमतोव्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः। अन्वयव्याप्तिव्यतिरेकव्याप्तौ विशिष्योपादाय तदुभयविशिष्टहेतुप्रकारकत्वमेव निवेश्यं। एकमात्रव्याप्त्यु-

पादाने * साधारण्यानुपसंहारित्वयोरेकतरासंग्रहप्रसङ्गादित्यग्रे- व्यक्तीभविष्यति । तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रका- रतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वे- नानुगमय्य निवेशनन्तु न सम्भवति । साध्याभाववद्वृत्तित्व- ज्ञानदशायां केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्ता ज्ञानोत्पत्त्या साधारण्यादेस्तादृशप्रकारता-शाल्यनुमिति सामान्य-विरोधित्वा- भावाद्व्याप्तिविशिष्टविषयकत्वमात्रस्य तद्विशिष्टहेतुतावच्छेदका- वच्छिन्नविषयकत्वमात्रस्य वा निवेशे स्वरूपासिद्धव्याप्तिरतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्न प्रकारकत्व- निवेशः । पक्षांशे व्याप्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोष- तादवस्थ्यं । धूमाभाववान् ह्रद इत्यादिज्ञानस्य द्रव्यत्वादिना हेतु- मत्ताज्ञानाविरोधित्वात् । साधारण्याद्यव्याप्तिश्च । वह्नित्वाद्य- वच्छिन्ने धूमाभाववद्वृत्तित्वादिग्रहस्य धूमादिव्याप्तिविशिष्टतद्व्यक्ति- त्वावच्छिन्नप्रकारकज्ञानाविरोधित्वादतोहेतुतावच्छेदकावच्छिन्न- त्वनिवेशः । पक्षांशे साध्यादिप्रकारकस्य संस्कारादेराहार्य्यज्ञानादेश्च बाधादिज्ञानाप्रतिबध्यत्वादसम्भव इत्यत स्तादृशानुमितित्वव्याप-

* अमसाधारण्याय परस्परनिरूप्यनिरूपकभावापन्नविषयताशालिज्ञानमेवो- पादेयं इति तत् प्रतिबन्धकतामादाय केवलान्वयिस्थलेऽप्रसिद्धस्य प्रतियोगितासम्बन्धेन साध्यत्ववदभावस्यापि ज्ञानमादाय लक्षणगमनसम्भवादिति चिन्त्यं ।

कतानिवेशः । साध्यव्याप्यहेतुधर्म्मितावच्छेदकक साध्यवत्ताज्ञानस्यैव साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकतया तादृशाकारलिङ्गनस्वरसात्तादृशहेतुविशिष्टपक्षतावच्छेदकावच्छिन्न विशेष्यक-साध्यतावच्छेदकावच्छिन्न-प्रकारकानुमितित्व-व्यापकप्रतिबध्यत्वस्य लक्षणघटकत्वोपगमे, पर्व्वतत्वाद्यवच्छेदेन वह्न्यादेः साध्यत्वे, तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसङ्गः । सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्व्वतत्वावच्छेदेन वह्न्यादिज्ञानं प्रत्येव प्रतिबन्धकतया, धूमविशिष्टपर्व्वतत्वावच्छिन्नधर्म्मिकवह्न्यादिज्ञानाप्रतिबन्धकत्वादिति तदुपेक्षितं । न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेपि शुद्धपर्व्वतत्वावच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र पर्व्वतत्वसामानाधिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकं तादृशानुमितेरपि शुद्धपर्व्वतत्वावच्छेदेनवह्न्याद्यवगाहित्वादिति वाच्यं। धर्म्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्म्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नत्वमेव संसर्गांशे भासते नतु तदेकदेशावच्छिन्नत्वमपि । तद्धर्म्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात् । अथ लिङ्गोपधानमते हेतोः सर्व्वत्रैव धर्म्मितावच्छेदकतया भानात्तादृशसंसर्गताभ्युपगम आवश्यकः । अन्यथा शुद्धपर्व्वतत्वावच्छेदेन हेतुमत्ताज्ञानस्थले हेतुविशिष्टपर्व्वतत्वावच्छिन्नसंयोगादिसंसर्गकानुमितेरेवोपगमे पर्व्वतत्वसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेपि तत्र तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तेः । नहि

सामानाधिकरण्येन वाधसिद्धोः सत्वोरनुमितिं * कश्चिदुपैति। तादृश वाधादिग्रहस्य क्वचिदप्यनुमितौ प्रतिवन्धकत्वासम्भवात् तेषां हेत्वाभासताविलयापत्तिश्चेति चेदेवमपि लिङ्गानुपधानमते तादृश-विषयतायां मानाभाव एव। अन्योपि लिङ्गानुपधानमताभि-प्रायकः।तन्मतेऽनुमितेः सर्वत्रैव तथाकारकतया, तादृशाकारक-त्वस्याव्यावर्त्तकतया, अनुमितिपदस्य तादृशानुमितिपरत्वदर्शना-सङ्गतेः॥

केचित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्या-ख्याय यथाश्रुतपरतानिर्वाहाय लिङ्गोपधानमतमाश्रयन्ते साध्य-व्याप्येत्यादिना। इत्याकारकानुमितिपरं, अनुमितेरित्याकारक-तामताभिप्रायकमिति व्याचक्षते † ॥

**तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शा-दनुमित्युत्पादेन, व्यभिचाराद्याग्रहादिज्ञानेनान्यथा-**

---

* अतएव क्षितिः सकर्तृका कार्य्यत्वादित्यनुमानप्रस्तावे कुसुमाञ्जलौ आचार्य्ये-णापि क्षितित्वरूपेण पक्षतायाम् अतोवाधादित्युक्तं। अन्यथा क्षितित्वसमानाधिकर-ण्येन वाधसत्वेपि हेतुविशिष्टक्षितित्वावच्छेदेन तन्मतेऽनुमितौ वाधकाभावादसङ्गत्या-पत्तेरिति भावः।

† तच्चिन्त्यं एतन्मते पक्षतावच्छेदकावच्छिन्नपक्षविषयतया एकत्रैव निवेशेन तद्धर्म्मावच्छिन्न तत्पक्षकत्वस्य ह्रदस्य वह्निशून्यत्वमित्यत एव व्यावृत्तिनिर्व्वाहे ह्रदस्य वह्निधूमशून्यत्वमित्यत्र धूमपर्यन्त गवेषणावैयर्थ्यापत्तेः समूहालम्बनानुमितिपरत्वे तादृशविषयताया द्वेधानिवेशेन व्यावृत्तिद्वयसङ्गतेः।

सिद्धत्वाच्च। व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षति रिति वदन्ति।

व्याख्याप्रयोजनं स्फुटयति तेनेति। एकत्र, वह्नित्वाद्येकधर्म्मावच्छिन्ने। व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः। अन्यस्य परामर्शात्तद्वह्नित्वादिरूपापरधर्म्मावच्छिन्ने व्याप्तिपक्षधर्म्मतावगाहिज्ञानात् व्यभिचारादिति। व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेपीत्यनेन सम्बन्धः। यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चित्तद्रूपावच्छिन्नलिङ्गकपरामर्शस्तत्र क्षणैकव्याजेन अनुमित्युपगमान्न तत्र व्यभिचारोदर्शितः। ननु तद्धर्म्मावच्छिन्नलिङ्गकानुमितौ तद्धर्म्मावच्छिन्नधर्म्मिकव्यभिचारज्ञानाभावस्य हेतुत्वोपगमान्नव्यभिचारः। तद्धर्म्मावच्छिन्नलिङ्गकत्वञ्चाव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्म्मिकव्याप्त्यादिज्ञानविशिष्टत्वं। तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यं। तेन धूमव्याप्य वह्निमानयमित्याकारकशाब्दादिपरामर्शोत्पत्ति * द्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्योवह्निर्धूमव्यभिचारी धूमव्याप्येन्धनवानित्याकारकसमूहालम्बनग्रहस्तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नित्वावच्छिन्नधर्म्मिकव्याप्त्यादिज्ञानविशिष्टत्वेपि

* अत्र च तृतीयक्षण साधारण मेवाव्यवहितोत्तरत्वं निवेश्यमन्यथा विनश्यदवस्थ परामर्शोत्तरानुमितेस्तादृश व्याप्तिज्ञानविशिष्टत्वाभावादिति।

न* क्षतिरत आह व्याप्त्यादीति । कृप्तकारणताकव्याप्त्यादिज्ञान-सत्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणानुमितिव्यतिरेकस्यासिद्धत्वा-दिति भावः । व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावादिना अन्यथा-सिद्धत्वशङ्कातु † प्रागेव निराकृता । न क्षतिर्न व्यभिचारादाव-व्याप्तिः । यत्रासद्धेतुविशेषे तादृशानुमितेरप्रसिद्धिस्तत्रत्यदोषे-ष्वव्याप्तेर्वक्ष्यमाणतया दृदृशयथाश्रुतव्याख्यायामनिर्भरसूचनाय-वदन्तीति ॥

पर्व्वतोनिर्व्वह्निर्धूमो वह्नेरभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथा-र्थेति ॥

पर्व्वतोवह्निमान् धूमादित्यादिसद्धेतुस्थले बाधादिभ्रमविषये ऽतिव्याप्तिवारकतया यथार्थपदं सार्थकयति । पर्व्वतोनिर्व्वह्नि-रिति । अत्र इति पदस्य त्रितयस्थले सम्बन्धाद्भ्रमत्रितयलाभः । प्रत्येकभ्रममादायैवातिप्रसङ्गसम्भवात् तादृशसमूहालम्बनभ्रमपर्य्य-न्तानुधावनवैफल्यात् तत्परत्वासङ्गतेरितिध्येयम् ।

प्रथम भ्रमोऽनुमितौ विरोधी । अन्यौ च तज्जनकज्ञाने तथा,

---

* नव्यभिचार इति भावः ।

† यत्र व्यभिचार ज्ञानं नास्ति व्याप्तिज्ञानञ्च नास्ति तत्रानुमित्यनुत्पादात् यत्र व्याप्तिज्ञानमस्ति व्यभिचारज्ञानाभावोनास्ति तत्रानुमित्युत्पादादित्याशयः ।

तयोरपि प्रथमेऽन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमाद्यंशे भ्रमत्वं अन्त्ये च प्रमेयत्वाभाववद्वृत्तित्वस्याप्रसिद्ध्या न तद् भ्रमत्वं। किन्त्वभावांशेऽनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमित्येतादृश विशेषमादृत्य शिष्यव्युत्पादनायानेकविधभ्रमकथनं॥

इदन्त्ववधेयं अभिधेयत्वं प्रमेयत्वस्यव्यभिचारीत्यत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वभ्रमो-वाच्यः। प्रतियोगितांशे साध्यतावच्छेदकावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोः साध्यभाववदवृत्तित्वरूपव्याप्तिघटकतया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात्। एवञ्च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगिताकत्वाप्रसिद्ध्या तादृशसम्बन्धेन भ्रमानुपपत्तिः। प्रतियोगितांशे सम्बन्धविशेषाद्यवच्छिन्नत्वस्य भ्रमइत्यपि न युक्तं। तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटित तद्भ्रमत्वानुपपत्तेः। नच तेन रूपेण प्रतियोगिताप्रकारकएवात्र भ्रमोविवक्षितः। ननु तदवच्छिन्नप्रतियोगिताकत्वसंसर्गक इति वाच्यं। लाघवात् * प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञानस्याकिञ्चित्करत्वात्। अत्राहुः स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन—

* अत्रावधेयं तादृश सम्बन्धेन विशिष्टाभावादेः किन्तु शुद्धवह्न्यभावादेरन्यथा पर्व्वतादौ महानसीयवह्निर्नास्तीति प्रतीतिवत् वह्निर्नास्तीति प्रत्ययः स्यादितिभावः।

साध्यतावच्छेदकवत्वमेवाभावस्य* साध्याभाववदवृत्तित्वरूपव्याप्ति-घटकं लाघवात्। एवञ्च तादृशसम्बन्धेनाभावांशे साध्यतावच्छेदक-प्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वादेः प्रसि-द्धेन तादृशसम्बन्धेन मेयत्वत्वादेरभावांशे भ्रमात्मक एव तथा-विधो ग्रह इति न किञ्चिदनुपपन्नम् † ॥

प्रथमे साध्याभाववदवृत्तित्वज्ञानविरोधी हेतौ साध्याभाववद्वृ-त्तित्वरूपव्यभिचारस्य भ्रमः, द्वितीये तदप्रसिद्ध्या व्यापकसामा-नाधिकरण्यग्रहविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणा-भावप्रतियोगितावच्छेदकत्वस्य भ्रमोऽभिमतः। असमानप्रकारक-ज्ञानस्याविरोधितया द्विविधव्यभिचारसंग्रहाय द्विविधव्याप्ति-विषयकसमूहालम्बनज्ञानस्यैव लक्षणे निवेश्यत्वात्। न च हेतुः साध्यस्यव्यभिचारीत्यतः साध्यतावच्छेदके हेतुसमानाधिक-रणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया, तदवगाहिज्ञान स्याभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्याकारकता नोपपद्यत इति वाच्यं। यतोऽभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगिताव-च्छेदकत्वं द्वयमेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः

---

* अत्र तादृश सम्बन्धेन साध्यतावच्छेदकविशिष्टाभाववदवृत्तित्वस्यैव व्याप्तित्वे महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिः अवच्छिन्नप्रतियोगिता-कत्वसम्बन्धेन वह्नित्वादिविशिष्टस्य महानसीयवह्न्यभावादेरधिकरणीभूतपर्व्वतादौ धूमादेर्वृत्तित्वादिति ध्येयम्।

† एतन्मतेऽन्वयितावच्छेदकरूपेणान्वय्युपस्थितिं विना मेयत्वत्ववृत्तिधर्म्मग्रहं विना एतदनुपपन्नमिति तु विभावनीयम्।

तत्र प्रथमं व्यभिचारतात्पर्य्यग्रहस्थले व्यभिचारपदार्थैकदेशे ऽभावेऽनुयोगितारूपषष्ठ्यर्थस्य तत्र प्रकृत्यर्थतावच्छेदकवह्नित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः । मत्वर्थीयार्थश्च स्वरूपसम्बन्धवान्, तस्य चाभेदेन प्रथमान्तार्थेऽन्वयः । द्वितीयतत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः । षष्ठीप्रकृति धर्म्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे तस्य च तद्भितार्थसम्बन्धिन एकदेशे घटकत्वसम्बन्धे सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः । एवञ्चोक्तवाक्यात्तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि लाभात्तत्र तदवगाहिभ्रमस्य दर्शिताकारकतासम्भवादित्यपि वदन्ति ॥

भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वं तस्य प्रतिबन्धपदार्थेऽनुत्पादेऽन्वयः । यथार्थेतीति । यथार्थपददानेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वस्य सर्व्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेपि न तमादाय दोष इति भावः ॥

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासत्वापत्तिः । अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकं तद्घटकन्तु न विशिष्टमिति

चेत्तर्हि यथार्थेति व्यर्थं। भ्रमविषयविशिष्टस्या-
प्रसिद्धत्वादित्यनुशयेनाह यदिति।

अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषय-
साध्याभावादावतिप्रसङ्गवारणेऽपि, भ्रमधेतुस्थले तादृशभ्रमविषय-
दोषघटकसाध्यादेः प्रत्येकं दोषत्वापत्तिर्दुर्व्वारैव। तदर्थं प्रका-
रान्तरानुसरणेच, तत एव पूर्व्वदोषस्यापि वारणसम्भवे यथार्थ-
पदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाघटित
लक्षणान्तरानुसरणबीजत्वमाह नन्विति। एकदेशस्यापि वि-
शिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह प्रत्येकमिति।
प्रत्येकपर्य्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः। हेत्वाभासता-
पत्तिः, हेत्वाभासपदार्थत्वापत्तिः। यद्रूपावच्छिन्नज्ञानस्यानु-
मित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपा-
वच्छिन्नमात्रज्ञानाद्धेतौदुष्टत्वव्यवहारस्य चानुदयेन इष्टापत्तिर्न
सम्भवतीति भावः। यादृशविशिष्टविषयकत्वं तादृशानुमिति-
विरोधितानतिरिक्तवृत्ति तत्त्वमिति विवक्षया न साध्यादावति-
व्याप्तिरित्याशयेनाशङ्कते अथेति। विशिष्टविषयकं साध्याभाव-
वद्वृत्तित्वविशिष्टसाधनादिविषयकमेव, तद्घटकञ्च तादृश-
विशिष्टघटकप्रत्येकपदार्थविषयकत्वस्य न विशिष्टं, न तादृश
विशिष्टनिरूपितं। तथा च प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्ध-
कतायाअतिरिक्तवृत्तित्वान्नातिव्याप्तिरिति भावः। व्यर्थमिति
यथार्थपदादानेपि सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवात्। ननु तत्र

भ्रमविषयप्रत्येकपदार्थस्योक्तरीत्या वारणेपि तद्विषयविशिष्टेऽति व्याप्तिरत आह भ्रमविषयेति। अप्रसिद्धत्वादिति। तथा च व्यातिव्याप्तिरिति भावः॥

केचित्तु दुष्टानामेव हेतूनां एतानि लक्षणानि, तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य। तदर्थश्च, तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञान विषयत्वमग्रेच तत्त्वमित्यस्य तद्वत्त्वमित्यर्थः। आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः॥

केचित्त्विति। नन्वाद्यस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिस्तेषामप्यनुमितिविरोधियथार्थज्ञानविषयत्वात्। न च ह्रदादि पक्षक-वह्न्यादि-साध्यकस्थले वह्न्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुतया लक्ष्यत्वमेवेति वाच्यं। तद्रूपावच्छिन्नपक्षक-तद्रूपावच्छिन्न साध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं। यदि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिविरोधियथार्थ ज्ञानविषयत्वमात्रं। तदा ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयवह्न्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादतिव्याप्तिरित्याशङ्कां परि जिहीर्षुस्तादृशाभावप्रतियोगिनां ज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थं व्याख्या-

स्यति। तज्ज्ञायमानदोषप्रतिबन्धकतामत एव संगच्छतेऽतस्तदवलम्बेनैवाह तत्रेति। तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयलक्षणस्य सर्व्वमत एव ज्ञायमानदोषप्रतिबन्धकताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः। तदर्थञ्चेति। प्रतियोग्यन्तेन व्यभिचारादिदोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितुं व्यभिचारादय इति। न तु तेन रूपेण लक्षणघटकत्वमित्यवधेयं। एवञ्च यथार्थं पदादाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसङ्ग * इति यथार्थपदसार्थक्यम्। यद्यपि पर्व्वतत्वाद्यवच्छिन्ने वह्नित्वाद्यवच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इत्यादेः सङ्केतौ दुष्टत्वव्यवहारस्य नापत्तिः, तत्र तत्पक्षसाध्यहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारकज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात् तादृशानुमितिप्रतिबन्धकबाधव्यभिचारादेश्चाप्रसिद्धत्वात्। ह्रदादौ वह्न्यादिसाधनमादाय च सर्वत्रैव दुष्टत्वव्यवहारदृष्ट स्तथापि धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वाद्यवच्छिन्नहेतुकधूमाद्यनुमितिप्रतिबन्धक

---

* ननु संशये वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयभानात् असम्भववारणाय यथार्थपदं सार्थकं। तथाच वैयर्थ्यशङ्का न सङ्गच्छते। नच संशयान्यत्वमेव निवेश्यं संशयव्यावर्त्तनाय यथा सन्निवेशे वैयर्थ्यविरहात्। अत्र केचित् संयोगाभाववद्वृक्षरूपबाधादावव्याप्तिः। तादृश विशिष्टविषयतायाः संयोगवान्नवेति प्रमासंशये सत्वात् अतस्तद्व्यावर्त्तनाय संशयान्यत्वनिवेशस्यावश्यकतया यथार्थपदवैयर्थ्यशङ्का इत्याहुः। इदमत्र चिन्त्यमेतन्मते निरवच्छिन्नविशेषणतया संयोगाभाववत्पक्षस्य बाधतया तादृशविशिष्टविषयतायाः प्रमात्मकसंशयेऽसत्त्वात् संशयान्यत्वनिवेशस्यानावश्यकता वृत्ते तादृशविशेषणतया संयोगाभावस्य वृत्तौ भ्रमत्वात्।

दोषप्रकारकज्ञानविषयत्वस्य प्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्न-
तादृशानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्ट वह्न्यादिरूप-
प्रसिद्धदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्य्येणापि तथा
व्यवहारः स्यात् । न च तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्य-
भानाद्रासभे तद्बाधेन नायमतिप्रसङ्ग इति वाच्यं । तथा सति दोष-
पदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वालाभात् तल्लाभानु-
रोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटक-
हेतौ वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य तत्प्रकारकतायाम्वा स्वाव-
च्छिन्नत्वार्थकतृतीयान्तलभ्यवह्नित्वाद्यवच्छिन्नत्वस्यान्वय इत्येवोप-
गन्तव्यत्वात् । न च विशिष्टे वह्नित्वादिधर्म्मवैशिष्ट्यबोधकपद
समभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानु-
मितिप्रतिबन्धकोऽर्थः । अथवा अनुमित्यर्थकसाधनशब्दस्यैव
वह्नित्वाद्यवच्छिन्नहेतुकानुमितिरूपविशेषलाक्षणिकत्वं । धात्वर्थे
ऽनुमित्यन्तर्भावे साधनपदार्थानन्वयप्रसङ्गात् तथा च विशेष्य एव
तृतीयार्थवैशिष्ट्यान्वयोपगमान्नोक्तातिप्रसङ्ग इति वाच्यं । एवमपि
वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारस्य भ्रममादायाति
प्रसङ्गादिति यथार्थपदसार्थक्यं । * अथवा इतरभेदानुमापकमेवेदं

---

* यथार्थपददानेपि वह्निमान् द्रव्यादित्यादौ वह्न्यभाववद्वृत्तिद्रव्यादिरूपसव्य-
भिचारस्य तादृशद्रव्यत्वादिमत्त्वसम्बन्धेन धूमादि सद्धेतावपि सत्त्वेन द्रव्यत्वाव-
च्छिन्नेन वह्निसाधने द्रव्यत्वावच्छिन्नं दुष्टं इत्यस्येव द्रव्यत्वावच्छिन्नेन वह्निसाधने धूम-
त्वावच्छिन्नो दुष्ट इत्यस्यापि व्यवहारस्य प्रसङ्गात् । तद्रूपावच्छिन्नलिङ्गकानुमितिप्रति-
बन्धकप्रकारकज्ञानविषयत्वं तद्रूपावच्छिन्नस्य दुष्टताव्यवहारनियामकमिति वक्तव्यं ।
अतोनोक्तदोष इति कथं यथार्थपदमित्यस्वरसादाह अथवेति ।

लक्षणं। तथा च पर्व्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्ट-लक्षणस्य तथाविधानुमिति-विरोधिज्ञानविषय-व्यभिचारादि--भ्रममादाय सद्धेतावितरभेदव्यभिचारित्वात् यथार्थपदसार्थक्यं। ज्ञानञ्चात्र स्वज्ञानविषय-प्रकृतहेतुतावच्छेदकवत्त्व-सम्बन्धावगाहि-ग्राह्यं। तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषप्रमाविषयत्वेपि नातिप्रसङ्गः। अग्रेपीदृशसम्बन्धेनैव तद्वत्त्वं वाच्यं। अथ ज्ञायमान पक्षनिष्ठसाध्याभावत्वादिना वाधादिदोषाणां प्रतिवन्धकता न सम्भवति। साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतयाऽविरोधित्वेनानुमित्यापत्तेः। किन्तु ज्ञानीयपक्षतावच्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्न विषयतावत्त्वेन तादृशविषयतया ज्ञानविशिष्टत्वेन वा। तच्च रूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति। तेषामेव तादृशभ्रमदशायां विरोधित्वाक्तोक्तापत्तिः। एवञ्च सद्धेतूनामनुमिति प्रतिवन्धकतावच्छेदकनिरुक्तविषयताश्रयनिरुक्तवह्न्यभावादि प्रमाविशेष्यत्वादतिव्याप्तिरितिचेन्न। यद्रूपावच्छिन्नविषयतासामान्यं प्रतिवन्धकतावच्छेदकं, तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयं। ह्रदोवह्निमान् धूमादित्यादौ च तादृशरूपं ह्रदविशिष्टवह्न्यभावत्वादिकं, ह्रदे वह्निर्नास्तीत्यादिज्ञाननिरूपित तद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिवन्धकतायामवच्छेदकत्वात्। सद्धेतुस्थले च न केवलवह्न्यभावत्वादिकं तथा। तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्मर-

विषयकज्ञाननिरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात्। पक्षतविशिष्टवह्न्यभावत्वादिविशिष्टश्च न किञ्चिदस्तु प्रसिद्धमिति नातिप्रसङ्गः। तृतीयमपि लक्षणमनयैव रीत्या परिष्कार्य्यमिति। यद्यपि अस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामतानाश्रयणेऽपि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यहेतुकस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य, यथार्थपदसार्थक्यमुपपादयितुं शक्यते। तथापि दुष्टस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आदृत इति।

ननु द्वितीयतृतीयलक्षणयोर्दोषेऽतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्यस्येति। प्रथममात्रस्य दुष्टहेतुलक्षणत्वे नैवोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितं। तत्त्वमित्यस्य यथाश्रुतार्थकत्वानुरोधादतस्तथैवाद्याद्यस्यैवेति। ईदृशव्याख्यायानिर्दोषत्वात् प्राहुरित्युक्तं॥

**लिङ्गमविवक्षितं यद्विषयत्वेन यादृशविशिष्टविषयत्वेन तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः।**

लिङ्गज्ञानस्येति। लिङ्गांशनिवेशस्य* निष्प्रयोजनकतया तस्या-

---

* वस्तुतस्तु सर्वथैव साध्यतावच्छेदकादिरूपेण हेतुसाध्यादिविषयकज्ञानमादाय लक्षणगमनान्नाव्याप्तिरिति निष्प्रयोजनकत्वमुक्तमिति।

विवक्षितत्वमाह लिङ्गमिति। यद्विषयत्वेनेत्यत्र तृतीयार्थोऽव-च्छेदकत्वं तच्च यद्यनतिरिक्तवृत्तित्वरूपमिदानीं निविश्यते तदाऽस-म्भवः। विशिष्टस्यानतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोष विषयकत्वस्य शुद्धह्रदत्वाद्यवच्छिन्नविषयकज्ञानेपि सत्वेनानुमिति-प्रतिबन्धकतातिरिक्तवृत्तित्वादतः स्वरूपसम्बन्धरूपमेव तद्वाच्यं। तथा च पर्व्वतोवह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमविषयवह्न्य-भावादावतिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतावच्छेदकघट-कत्वात्। असम्भवभयेन चावच्छेदकतापर्य्याप्तिनिवेशासम्भ-वात्। अतोयद्विषयत्वेनेतिपदं व्याचष्टे यादृशविशिष्टविषय-त्वेनेति। यद्रूपावच्छिन्नविषयत्वेनेत्यर्थः। एवञ्च तत्त्वमि-त्यस्य तद्रूपावच्छिन्नत्वमर्थः। व्याख्याप्रयोजनं स्फुटयति तेनेति। यत्प्रकारकत्वेन प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रम-मादाय वह्न्यभावादौ नातिप्रसङ्गसम्भवः। पर्व्वतादावतिप्रसङ्ग-सम्भवेपि यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनानुमितिविरो-धित्वं, तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामक-त्वोपगमे, पर्व्वतादिविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्व्वतनिष्ठप्रकारताकत्वेन प्रति-बन्धकत्वात् तेन सम्बन्धेन पर्व्वतादिमत्तायाः पर्व्वतमहान-सान्यतरत्वादिरूपसद्धेतौ सत्वेपि, प्रसिद्धधूमादिरूपहेता वसत्वात्तत्र दुष्टता व्यवहारापत्तेरयोग इति, तदनुरोधेन पक्षविशेष्यकेत्युक्तं। भ्रमपद निश्चयसामान्यपरं तेन सद्धे-त्वादौत्या दपदग्राह्यभाध्यशून्यपक्षकदुष्टहेतौ प्रतिबन्धकप्रमा-

विषयसाध्याभावादेरेव सत्वेपि नातिप्रसङ्ग इति उक्तव्याख्याने ऽनतिरिक्तवृत्तित्वमेवावच्छेदकत्वं विवक्षणीयं। विशेषणीभूत-वह्न्यभावाद्यविषयके शुद्धह्रदत्वादिना ह्रदादिविषयकज्ञाने वह्न्य-भावविशिष्टह्रदत्वाद्यवच्छिन्नविलक्षणविषयतानिरूपकत्वस्यासत्वे-नोक्तासम्भवानवकाशात्। तथाच केवल वह्न्यभावत्वाद्यवच्छिन्नवि-षयताकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वान्नातिप्रसङ्ग इत्यर्थः॥

अवच्छेदकत्वञ्च, इहानतिरिक्तवृत्तित्वं। तेन विशिष्टस्यासत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः। विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन। तेन प्रमेयत्वादिविशिष्टे सव्यभिचारादौ नातिप्रसङ्गः।

ननु स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽयमेवातिप्रसङ्गो दुर्वारः। अप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रति-बन्धकतावच्छेदकताघटकीभूतस्याधिकरणमीदृशविवक्षया तादृशातिप्रस-ङ्गवारणे पुनरसम्भवः। वह्न्यभावत्वादिना घटाद्यवगाहिनोवह्न्य-भाववान् ह्रद इत्यादिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानु-रोधेन वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारता-निरूपितह्रदत्वावच्छिन्नविशेष्यताक निश्चयत्वेनैव प्रतिबन्धकताया वाच्यतया वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयतायास्तादृश-प्रकारतानिरूपितह्रदत्वाद्यवच्छिन्नविषयतात्वेनावच्छेदकत्वेपि अ-प्रामाण्यज्ञानाभावादिविशिष्टवह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नवि-

श्रयताकनिश्चयत्वस्यावच्छेदकतापर्य्याप्त्यनधिकरणत्वादतः तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदत्वार्थकत्वं स्फुटयति अवच्छेदकत्वञ्चेति। इह लक्षणे घटकत्वं सप्तम्यर्थः। न च विशिष्ट विषयकत्वस्याप्रतिबन्धकसंशयादौ सत्वात् पुनरसम्भव इतिवाच्यं। ज्ञानस्येत्यत्र ज्ञानपदमनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं, षष्ठ्यर्थश्चाधेयत्वं तस्य यद्विषयकत्वेऽन्वयः। एवञ्च तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य विवक्षणीयतया असम्भवाभावात्। अनतिरिक्तवृत्तित्वं, स्वव्यापकीतत्कत्वं। नतु तच्छून्यावृत्तित्वं तादृशनिश्चयवृत्तित्व विशिष्टस्य विशिष्टविषयकत्वस्य विशेष्यीभूतविशिष्टविषयकत्वानतिरिक्ततया तस्यातिप्रसक्तत्वे विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात्॥

यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वं। अतोनोक्तरीत्या असम्भव इति तदसत्। तथासति मूलोक्तस्य ज्ञानस्येत्यस्य वैयर्थ्यात् ह्रदत्वाद्यवच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकयत्किञ्चिज्ज्ञानीयविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वाद्यवच्छिन्नेऽतिप्रसङ्गाच्च। मन्मते चानुमितिप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयतात्वावच्छिन्नव्यापकताविरहेणातिप्रसङ्गानवकाशात्॥

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ह्रदत्वाद्यवच्छिन्न-

विषयकतया तस्य च ह्रदो वह्निमानित्याद्यनुमित्यविरोधित्वादस-
म्भवः । जलवान् वह्निमानित्यादिस्थलीयदोषासंग्रहेण अवि-
शेषितधर्म्मावच्छिन्नपक्षकादिस्थलीयस्य किञ्चिद्विशिष्टघटित
स्यासंग्रहेण च पक्षतावच्छेदकाद्यंशेऽन्याप्रकारकत्वादिनिवेशस्या-
शक्यत्वात्, तादृशविशिष्टाघटकपदार्थाविषयकत्वस्य ज्ञानविशेषण-
त्वोपगमे सर्व्वमाकाशवदित्यादिस्थलीयबाधादौ तदघटकाप्रसिद्धा
अव्याप्तिः । यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघट-
कता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताभिन्नकिञ्चिदवच्छिन्नविष
यताशून्यत्वं ज्ञाने निवेश्यं । जातित्वाद्यवच्छिन्नस्य ह्रदत्वादेर्न
वह्न्यभाववद्ध्रदत्वावच्छिन्नघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादि
विषयता तादृशविषयताभिन्नैव तच्छून्यत्वञ्च नोक्तज्ञानस्येति न
दोष इत्यपि न सत् । तथासति ह्रदो जात्यभाववानित्यादिस्थलीय-
बाधादेरेव दुःसंग्रहत्वात् जातित्वादिना ह्रदत्वादिरूपधर्म्मिता-
वच्छेदकावगाहिनो जातिमान्जातिमानित्यादिज्ञानस्य जाति-
त्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्म्मितावच्छेदकतारूपविषयताया नि-
रुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्यानुमित्यप्रतिबन्ध-
कस्य शून्यत्वात्तेनावारणात् । मैवं यद्रूपावच्छिन्नविषयतात्वं
तादृशविशिष्टविषयतासमानाधिकरणाभावप्रतियोगितावच्छेदकं
तद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञाने विशेषणतया साम-
ञ्जस्यात् । अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशे-
षितह्रदत्वादिघटिततत्तद्रूपावच्छिन्नविषयितात्वावच्छिन्नाभावस्य

दोषात्मकविशिष्टविषयतासमानाधिकरणत्वात् तज्ज्ञानस्याप्रवृत्ति-रिति। विशिष्टस्य विशिष्टविषयकत्वस्य असत्वेपि वह्न्यभावत्वादिना घटाद्यवगाहिभ्रमेऽसत्वेपि तथाच विशिष्ट विषयकत्वेन प्रति-बन्धकता न सम्भवतीति भावः। भ्रमाप्रतिबन्धेऽपि तादृश-भ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेपि न क्षतिः नोक्तयुक्त्याप्यर्थांश-निवेशेऽपि असम्भवस्तदनिवेशे पूर्व्वोक्तातिप्रसङ्गोवा।

ननु विशिष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूप-सम्बन्धरूपावच्छेदकत्वसत्वेपि, यादृशविशिष्टविषयतासामा-न्यस्य तादृशावच्छेदकत्वविवक्षया अतिप्रसङ्गवारणसम्भवात् तदेव कथं न विवक्षितमिति। नच सामान्यपदस्य व्यापकतार्थ-कतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्याप-कत्वं प्रवेश्यं, तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयता व्यापकत्वनिवेशनमेवोचितमिति वाच्यं। यतोवह्न्यभावविशिष्ट-ह्रदादिनिरूपितविषयताया अनुमित्यप्रतिबन्धकसंशयाहार्य्यप्रा-माण्यज्ञानास्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धकतायां तद्व्यापकत्वमित्यनाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्व-विशिष्टायाविशिष्टविषयताया व्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयं। तदपेक्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदक-तायां बाधादिरूपदोषविषयतात्वव्यापकत्वं वक्तुमुचितं। तथा सति निश्चयत्वाद्यनिवेशात्, समानाकारकज्ञानस्य विषयिताया भेद-स्याप्रामाणिकतया संशयादिज्ञानीयविषयिताया अपि निश्चयत्वा-दिविशिष्टीयतयैव प्रतिबन्धकतावच्छेदकतया बाधादिरूपदोष-

निरूपितविषयतात्वव्यापकताया अक्षतत्वात् । नच वह्न्यभाववान् ह्रदो वह्निमानित्याहार्य्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयिता नानाहार्य्यज्ञानसाधारणी, तादृशाहार्य्यज्ञान समानाकारकानाहार्य्यज्ञानाप्रसिद्धेः ह्रदोवह्न्यभाववानित्यनाहार्य्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयतात्वस्य वह्न्यादिप्रकारतानिरूपिततादृशाहार्य्यज्ञानीयविशिष्टह्रदादिविषयतायाभिन्नत्वात् तथाचानाहार्य्यत्वविशिष्टविषयतायां एव प्रतिबन्धकतावच्छेदकतया न प्रतिबन्धकतावच्छेदकतायांदर्शिताहार्य्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्यापकत्वमिति वाच्यं तथासति अनाहार्य्यज्ञानीयविशिष्टविषयितात्वव्यापकताया एव विवक्षणीयत्वात् तावतापि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाप्रवेशेन लाघवानपायात् । मैवं स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्टस्य पर्व्वतादेर्ज्ञानस्य वह्न्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयिताकपाषाणमयत्वविशिष्टपर्व्वतादावतिव्याप्तिः । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्व निवेशपक्षे तादृशविशिष्टविषयतायाः पाषाणमयत्वावच्छेदेन वह्न्यभाववत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात् । नचानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षेपि जलाद्यवच्छेदेन वह्न्यभाववत्ताघटितस्य वह्न्यभाववज्जलादिमद्वृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवानवह्न्यभाववानित्यादिज्ञानसहितस्य जलवांश्च ह्रद इत्यादिज्ञानस्य तादृशज्ञानविशिष्टतादृशज्ञानत्वेनैव

प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य सत्प्रतिपक्षाद्यनात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनीयतया मन्मतेपि तत्र नातिप्रसङ्ग इति वाच्यं । ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूप सत्प्रतिपक्षाव्याप्तेः । साध्याभावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानत्वेन स्वतन्त्रसाध्याभावधर्म्मिक तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानसाधारण्यानुरोधेनावश्यकल्प्यप्रतिबन्धकतयैवोपपत्तेः तादृशविशिष्टज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावादुक्तविशिष्टेतिप्रसङ्गस्तु विवक्षणीयविशिष्टान्तराघटितत्वनिवेशनेनैव वारणीयः । नच ज्ञानद्वयसाधारणप्रतिबन्धकतायाः प्रत्येकज्ञानविषयविशिष्टविषयकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकत्ववत्तथाच दर्शितविशिष्टघटकस्य प्रत्येक ज्ञानविषयस्य न निरुक्तविशिष्टात्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमेवेतिवाच्यं। वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैव यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रतिबन्धकतानतिरिक्तवृत्ति, तादृशविशिष्टद्वयाघटितत्वस्यापि निवेशनीयतया उक्तविशिष्ट वारणसम्भवात् । नचैवं तादृशविषिष्टद्वयघटितोक्तसत्प्रतिपक्षेऽव्याप्ति स्तस्य प्रतिहेतुव्यापकताविशिष्टसाध्यभाव प्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यं । सत्प्रतिपक्षघटकतादृशविशिष्टद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयविषयता-

शून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितत्वार्थकत्वात् । यत्र सत्प्रतिपक्षाप्रसिद्धि स्तत्र भिन्नान्तमनुपादेयमेव, साध्यादिभेदेन लक्षणभेदात् । भ्रमात्मकज्ञानीयविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसाध्याभावादि विषयतोपेया ।

वस्तुतस्तु दर्शित विशिष्टस्य सत्प्रतिपक्षरूपता नाङ्गीक्रियते ऽपितु हेतुतावच्छेदकरूपाघटितसाध्याभावाभाववदवृत्तिमत्पक्षात्मकविशिष्टस्यैव व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य उत्तरोत्या संग्रहे तद्धर्म्मव्यापकसाध्याभावकालीनतद्धर्म्मविशिष्टपक्षादिव्यावृत्तिरप्यशक्या स्यादित्यविशेषेण व्यापकताघटितविशिष्ट मत्त्वस्यालक्ष्यताया एव युक्तत्वात् । नचोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचित मिति वाच्यं । एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेनासाधारण्यविरोधरूपस्य विषयतायाः पक्षधर्म्मिक प्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवाऽवच्छेदकत्वात् प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात् । दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात् । नच पक्षवृत्तित्वविशेषितं प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यं पक्षवृत्तित्वाघटितविशिष्टविषयताया अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात् तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतु साध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतहेत्वादिरूपनिरुक्तविशिष्टद्वयघटिततया निरु-

कविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यं । पक्षवृत्तित्वाद्यघटितविशिष्टस्यैवासाधारण्यादिरूपतायां विरोधोऽपि फलतः प्रतिरोध एव तदन्यत्वेन वा विरोधि विशेषणीयमिति पङ्क्तिव्याख्यानावसरे सम्पादनीयत्वादिति निष्कर्षः ॥

नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि व्यभिचारादिघटितपदार्थाऽन्तरेतिव्याप्तिस्तद्विषयकत्वस्यापि प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह विशेषणीयश्चेति । तादृशलक्षणमिति शेषः । तादृशविशिष्टेति । अनुमितिप्रतिबन्धकतायां यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः । व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादि रूपतादृशरूपावच्छिन्न घटितत्वादसम्भव इत्यतोऽन्तरेति । स्वावच्छिन्नाविषयक प्रतीति विषयतावच्छेदकावच्छिन्नार्थकं । अतः शुद्धव्यभिचारादेर्मेयत्वविशिष्ट व्यभिचाराद्यभिन्नत्वेपि न क्षतिः । तदघटितत्वं तदविषयकप्रतीति विषयत्वं एवञ्चानुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं तादृशं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् तदवच्छिन्नत्वं समुदितार्थः । यद्रूपावच्छिन्ने लक्षणं सङ्गमनीयं तदेव स्वपदार्थः । भवति हि व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीति विषयतावच्छेदकीभूता ये बाधत्वादय स्तदवच्छिन्नाविषयक प्रतीतिविषयतावच्छेदकं व्यभिचारत्वादीति तदवच्छिन्ने लक्षणसङ्गतिः । मेयत्वविशिष्ट व्यभिचारत्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छे-

दकत्वाभावान्नतदवच्छिन्नेऽतिव्याप्तिः। मेयत्व विशिष्टव्यभिचारादेरपि मेयत्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात्तद्दोषः स्यादत स्ताद्दशरूपाश्रयधर्म्मिणं तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनाविशिष्य स्वमेव ताद्दशविषयतावच्छेदकत्वेन विशेषितं। मेयत्वविशिष्टव्यभिचारत्वाद्याश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छिन्नविषयक प्रतीतौ दुर्घटत्वात्तद्दोषः स्यादतः स्वाश्रयाविषयकत्वमुपेक्ष्य स्वावच्छिन्नाविषयकत्व निवेशः।

स्वावच्छिन्नाविषयक प्रतीति विषय वृत्तित्वस्य ताद्दश धर्म्म विशेषणत्वे, व्यभिचारत्वादेरपि मेय त्वादिना व्यभिचारत्वाद्यवच्छिन्नाविषयक प्रतीति विषये व्यभिचारादौवर्त्तमानत्वादसम्भव इत्यत स्ताद्दश विषयतावच्छेदकत्वेन धर्म्मोविशेषितः। प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयक प्रतीति विषयतावच्छेदकं यद्गगनाभाववन्मेयत्वादि, तदाश्रयाविषयक प्रतीत्य प्रसिद्ध्याव्यभिचारादौ ताद्दश प्रतीति विषयत्वस्य दुरुपपादतयाऽव्याप्तिरतस्तदवच्छिन्नाविषयकत्व निवेशः। अत्र च ताद्दश विशिष्टान्तरा विषयक प्रतीति विषयतावच्छेदकत्वस्य, दोषतावच्छेदक धर्म्म विशेषणतापित्तया ज्ञानस्येत्यत्रज्ञान पदार्थे ताद्दशविशिष्टान्तराविषयकत्व निवेश एवोचितः। एवञ्च निष्कृष्ट वक्ष्यमाण कल्पे यद्विषयक निश्चयस्येत्यत्र निश्चयएव तन्निवेश्यं लाघवादित्यवधेयं।

अथ धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौवाधादेर्व्यभिचारादि घटिततया तन्ना व्याप्तिः। नच यद्रूपावच्छिन्न

विषयकत्वं स्वावच्छिन्नविषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकं तादृश रूपान्तरावच्छिन्नाघटितत्वस्य विवक्षितत्वान्नदोषः। व्यभिचारस्य उक्तबाध विषयकत्वान्यूनवृत्ति व्याप्तिज्ञान प्रतिबन्धकतावच्छेदकविषयिताकत्वेपि तादृश प्रतिबन्धकता सामान्यान्तर्गतानुमितिप्रतिबन्धकतावच्छेदकविषयिताकत्वविरहेण तादृश घटितत्वस्याकिञ्चित्करत्वादितिवाच्यं, व्यभिचारत्वादि विशिष्ट-विषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकविषयिता निरूपकतावच्छेदकस्य तदवच्छिन्नाविषयक प्रतीति विषयतावच्छेदकस्याप्रसिद्धाऽसम्भवा द्व्यभिचारत्व मेयत्व विशिष्ट व्यभिचारत्वादेरेवतथाविध विषयिता निरूपकतावच्छेदकत्वःत् तस्यच व्यभिचारत्वाद्यवच्छिन्ना विषयक प्रतीति विषयतावच्छेदकत्वाभावात् ॥ नच स्वावच्छिन्नविषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदक विषयिता निरूपकतावच्छेदकः कश्चित् स्वावच्छिन्नाविषयक प्रतीति विषयतावच्छेदकोयस्य एवम्भूतं यद्यत्स्वं, प्रमेयत्व विशिष्ट व्यभिचारत्वादि, तदवच्छिन्नाविषयक प्रतीति विषयतावच्छेदकत्वस्यविवक्षणीयतया न दोष इति वाच्यं तथा सति धूम व्यभिचारि वह्निमान् धूमवान् वह्नेरित्यादौबाधत्वाद्यवच्छिन्न घटक तावच्छेदकस्य धूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाविषयक प्रतीति विषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्न प्रतिबन्धकतासामान्यावच्छेदक विषयिता निरूपकतावच्छेदक व्यभिचारत्वकत्वादव्याप्तेदुर्वारत्वात्। नच स्वावच्छिन्नविषयितावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकीभूतं

यत् किञ्चित् विषयित्वं यादृश यादृश धर्म्मावच्छिन्ना निरूपितं तादृश धर्म्मावच्छिन्नाविषयक प्रतीति विषयतावच्छेदकं यत्त्वं तद्रूपावच्छिन्नत्व मेव समुदितार्थः। मेयत्व विशिष्ट व्यभिचार त्वाद्यवच्छिन्नविषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकी भूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्न निरूपित विषयितायाः मेयत्व विशिष्ट व्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन तदवच्छिन्ना-विषयक प्रतीति विषयतावच्छेदकत्वस्य च स्वस्मिन्नसत्वेन मेय त्व विशिष्ट व्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात्। व्यभि-चारत्वादिशिष्टविषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदि कायाः कस्याश्चिदपि विषयितायाः व्यभिचारत्वादि विशिष्टा-निरूपितत्वासम्भवात् तादृश विषयितायाः यादृश यादृशविशिष्टा निरूपितत्वं, मेयत्व विशिष्ट व्यभिचारत्वादेरेव तादृशत्वात्, तद-वच्छिन्नाविषयक प्रतीति विषयतावच्छेदकस्य व्यभिचारत्वादेः स्वपदेनोपादातुं शक्यत्वाच्चन कश्चिदोषः। अथवा यद्धर्म्मावच्छिन्न विषयत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकीभूत विषयिता त्वं यद्धर्म्मावच्छिन्न निरूपितत्व व्याप्यं तद्धर्म्मवत्त्व मेव समुदि-तार्थं इति वाच्यं, वाधविशिष्ट व्यभिचारत्वाद्यवच्छिन्नेऽति प्रसङ्गः। तादृश धर्म्मावच्छिन्नविषयकत्वावच्छिन्नवाधज्ञान प्रतिबन्ध-कतायां केवलव्यभिचार विषयितायाः, तादृश व्यभिचारज्ञान प्रतिबन्धकतायाञ्च केवलवाध विषयितायाः अनवच्छेदकत्वेन वाध विशिष्ट व्यभिचारत्वाद्यवच्छिन्नविषयितायाः एव तथाविध प्रतिबन्धकता सामान्यावच्छेदकत्वं, तस्याञ्च तादृश धर्म्मविशिष्ट

तद्घटकतावच्छेदकविशिष्ट निरूपितत्वस्यावश्यकत्वात् प्रथम कल्पेत्व पदेन चरमकल्पेयत् पदेनतस्योपादान सम्भवात ।

अथ वह्न्यभावादि धर्म्मितावच्छेदकक वह्न्यादि प्रकारक बुद्धेरिव धूम व्यभिचार विशिष्ट वह्न्यादि धर्म्मितावच्छेदककस्य धूमव्याप्यतया वह्न्यादि प्रकारक ग्रहस्यानाहार्य्यस्या सम्भवेन तादृश पक्षतावच्छेदकावच्छिन्न पक्षक समूहालम्बनानु मिते रप्रसिद्धया तादृशानुमिति प्रतिबन्धकता घटित यथा श्रुत लक्षणस्य तद्रूपावच्छिन्न पक्षक वह्न्यादि हेतुक दोषेऽव्याप्तिं स्वय मेव वक्ष्यति तद्वारणप्रयासो व्यर्थेति चेत्भवतुतावदेवं, तथापि विशेषगुणाभाववान् घटोगुणसामान्याभाववानित्यादौ विशेष गुणवद्घटादिरूपा श्रयासिद्धेर्गुणवद्घटादि रूपवाध घटितायाः संग्रह आवश्यकः। यदिच तत्र घटत्वावच्छेदेन गुणवत्त्व मेव वाधः, आश्रयासिद्धिश्च तत्सामानाधिकरण्येन तदवच्छेदेन वा विशेष गुणवत्वं, तस्याञ्च गुणत्वरूपसामान्यधर्म्मावच्छिन्ने घटत्व व्याप कता घटितोक्त वाधस्य न प्रवेशः, विशेष गुणत्वेन घटत्व व्यापकताया स्तत्र प्रवेशेऽपि सामान्य रूपेण व्यापकताया स्तद- न्तर्भावादिति न तादृशा सिद्ध्यसंग्रह प्रसङ्ग इत्युच्यते तथापि विशेष गुणाभाववान् द्वितीयक्षणावच्छिन्नो घटोगुणसामा न्या भाववानित्यादौ द्वितीयक्षणावच्छिन्ने घटेविशेषगुणवत्त्वरूपा श्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूप वाध प्रवेश स्यावश्य कत्वात् लक्षणेच तत् संग्रहस्यावश्यकतया उक्तविशेषणदा नानुपपत्तिः। वस्तुतस्तु अत्र वदन्तीत्यादि निष्कृष्ट कल्पेयत्व

विशिष्ट व्यभिचारादि वारणाय विशिष्टान्तरा घटितत्वस्य निवेश नीयतयातन्मते दर्शित वाधाद्य संग्रहोदोष एव। एतेन स्वावच्छिन्न-निरूपित विषयितावच्छिन्नयत् किञ्चित् प्रतिवन्धकतावच्छेदक विषयिताक विशिष्ट निरूपित विषयितात्व व्यापक स्वावच्छिन्न निरूप्यताकत्वं समुदितार्थः। मैयत्व विशिष्ट व्यभिचारत्वादिकं नैतादृशंत्वं तदवच्छिन्नविषयकत्वावच्छिन्न प्रतिवन्धकतावच्छेदक व्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूप्यत्वाव्याप्यत्वादुक्तस्थ-ले च विशेषगुण विशिष्ट घटादि रूपाश्रया सिद्धादि विषयकत्वा-वच्छिन्न विशिष्ट पत्त ग्रहादि निरूपितयत् किञ्चित् प्रतिवन्धकता वच्छेदक विषयताक विशिष्ट निरूपित विषयितात्वस्य तादृशाश्रया सिद्धादि निरूपितत्व व्याप्यत्वात्तत्व लक्षण समन्वयः। प्रतिवन्धक-तायां यावत्स्वानिवेशानोक्तरीत्या वाध विशिष्ट व्यभिचारादा वति प्रसङ्गः। स्वावच्छिन्ना निरूपिता यादृशा यादृशविशिष्ट विषयिता, तादृश विशिष्टविषयितानवच्छिन्नप्रतिवन्धकतावच्छेदकस्वावच्छिन्न विषयिताकोदोधर्म्म स्तद्वत्त्वं समु दितार्थः। मैयत्व विशिष्ट व्यभि-चारत्वादिकं नैता दृशं त्वं तदवच्छिन्ना निरूपित शुद्ध व्यभिचार-त्वाद्य वच्छिन्नविषयितावच्छिन्नाया मेव प्रतिवन्धकतायां तदव-च्छिन्न विषयितायाश्चच्छेदकत्वात् उक्तस्थले तादृश विशिष्ट वाध विषयकत्वस्य तद निरूपित व्यभिचारविषयितानवच्छिन्नायाश्चनु मिति प्रतिवन्धकतातदवच्छेदकत्वा लक्षण समन्वय इति परास्तं यद्विषयक निश्चयस्य विरोधिविषयिता प्रयुक्त इत्यादि निष्कृष्ट कल्पेऽनु मिति प्रतिवन्धकताया अघटकत्वात प्रतिवन्धकतायां

विशिष्टान्तर विषयकत्वानवच्छिन्नत्व विशेषणदानस्या सम्भवेन यत् पदार्थस्य तादृश पदार्थान्त रा घटितत्वेन विशेषणीय तया-उक्तवाधा व्याप्तेरशक्यपरीहारात् ॥

अत्र केचित् स्वसजातीय विशिष्टान्तरा घटितत्व मेव यत् पदार्थे विशेषणं देयं। साजात्यञ्च हेत्वाभास विभाजक रूपेण, तच्चरूपं वाधत्व व्यभिचारत्वादि, तेन रूपेण व्यभिचारादेर्न वाधादि साजात्य मिति व्यभिचार घटित वाधादीनाव्याप्तिः। नचैवं यद्विषय कनिश्चयस्य विरोधि विषयता प्रयुक्त उभयाभाव स्तत्त्वमित्यत्र विरोधि विषयता प्रयुक्तपदस्यवैयर्थ्यं। घटादेः तादृश रूपेण सजातीयत्वा प्रसिद्धेरवाति प्रसङ्गाभावादिति वाच्यं स्वस-जातीय विशिष्टान्तर घटितं यत्स्वं तदविषयक प्रतीति विषय त्वस्य विवक्षयाऽनुयोगिनिस्वत्वानन्तर्भावेण पदार्थान्तरेष्वति प्रसङ्ग वारकतयातद्दल सार्थक्यात् नच व्यभिचार विशिष्ट मेयत्वादेर्हेत्वा भासत्वविरहाद्धेत्वाभा सविभाजक रूपेण सजातीया प्रसिद्धया तस्य स्वपदेनोपादातुमशक्यतया मेयत्वविशिष्टव्यभिचारादेरेवस्वपदेनो पादेयतया तद्भिन्नतया तत्राति प्रसङ्ग इति वाच्यं विशिष्टान्तरा घटितत्वेना घटितस्य साध्यसाधनग्रहाविरोधिज्ञाननिष्ठविषयिता सम्बन्धेन व्याप्तिग्रहप्रतिवन्धकता नतिरिक्तवृत्तित्वादि रूपस्य व्यभि-चारादि विभाजकस्यात्र निवेशात्तादृश रूपस्य च व्यभिचार वि-शिष्ट मेयत्वादि साधारणत्वादित्याहुः। अत्रेदं वोध्यं प्रतियोगि नि स्वत्वान्तर्भावेण तादृश लक्षण करणेपि व्यभिचार घटित वाधा दावव्याप्तिवारण मशक्य मेव तत्र सजातीय विशिष्टान्तर घटितं

यत् स्वं धूम व्यभिचारि वह्निमत्त्वं, तदघटितत्वस्य तद्‌घटित बाधादावसत्त्वात् यदि तदघटितत्वम् तदपर्य्याप्त विषयता पर्य्याप्त्यधिकरणत्वं तच्च तत्र सुघट मेव एकदेशापर्य्याप्त विषयताया अपि समुदाये पर्य्याप्तिरित्युच्यते तदाप्य व्याप्ति र्दुर्व्वारैव निरुक्त व्यभिचारत्वेन सजतीय विशिष्टान्तर घटित स्ता-दृश बाध एवतदपर्य्याप्तविषयतायास्तत्रा भावात् । नच स्ववृत्ति यावद्धेत्वाभासविभाजक रूपेण साजात्यं विवक्षणीयं । तथाच बाधादि घटक व्यभिचारादौ बाधत्वाद्यसत्त्वान्न तादृश बाधादि सजातीयत्वं अतस्तत् संग्रह सम्भव इति वाच्यं एवं सति बाध विशिष्ट व्यभिचारादौ स्ववृत्ति बाधत्व व्यभिचारत्वादियावद् धर्म्मेण व्यभिचार बाधादौ सजातीयत्वा प्रसिद्ध्या ऽतिव्याप्तेः तस्मात् व्यभि-चारादि घटित बाधादेः संग्रह प्रकारोऽग्रे प्रदर्शनीय एवादरणीयः । मेयत्व विशिष्टव्यभिचारादौ* तादृश व्यभिचारत्वाद्यवच्छिन्ने । नाति प्रसङ्गः नदोष व्यवहार प्रसङ्गः । अत्र मेयत्व विशिष्ट व्यभिचारो दोष इत्यादि व्यवहाराभावान्नेष्टापत्तिः सम्भवति । नच विशिष्टव्यभि चारादेः शुद्धव्यभिचारत्वादिना दोषत्वस्याच्चततयोक्तविशेषणदानेऽपि तादृश व्यवहारापत्तिर्दुर्व्वारैवेति, तन्नेष्टापत्तौ व्यर्थं विशेषण मिति वाच्यं दोषादि पदस्य निरुक्त विशेषणावच्छिन्नानुमिति प्रतिबन्धक-तावच्छेदक स्वावच्छिन्न निरूपितविषयताकत्वेनान्वयितावच्छेदक धर्म्मबोधकतायाव्युत् पन्नतया प्रकृतेव मेयत्व विशिष्ट व्यभिचार-त्वादिरूपस्यान्वयितावच्छेदकस्योक्त विशेषणासत्वेनाति प्रसङ्गा

---

* दीधितौ मेयत्वविशिष्टव्यभिचारा दाविति पाठाभिप्रायेणेदं ।

भावादिति हृदयम्। नन्वा अयः सिंहव्यादिस्थले पक्षतावच्छेदका भावत् पक्षकत्वादिक मेव दोषस्तस्यैव हेतुनिष्ठतया हेतोर्दुष्टत्व व्यवहार निर्वाहकत्वात् तादृश धर्म्मस्य तादृशा भाववत्पक्षादिरूप तादृश विशिष्टान्तर घटित तया ऽव्याप्ति रित्यतआह

एवञ्च पक्षतावच्छेकादि विरहविशिष्टः पक्षः पक्षनिष्ठस्तद्विरहोवा। साध्याभाववद्वृत्तिसाधनं, साधनवद्वृत्ति साध्याभावोवा हेतुदोषोयेन केनापि सम्बन्धेन तद्वांश्च प्रकृतोहेतुर्दुष्टः।

एवञ्चेति तादृश विशेषणदानेचेत्यर्थः आदिपदात् साध्यादि परिग्रहः पर्व्वतादिधर्म्मिककाञ्चनमयत्वादिविशिष्टवुद्धौ पर्व्वतः काञ्चनमयत्वाभाववानित्यादि धर्म्मिविशेष्यक निश्चयस्येव पर्व्वते काञ्चनमयत्वं नास्तीत्यादि धर्म्मिविशेषणक निश्चयस्यापिविरोधित्वमानुभविक मतस्तद्विषयस्यापि, दोषत्व माह पक्ष निष्ठ इति आधेयतासम्बन्धेन पक्षविशिष्ट इत्यर्थः। समुच्चयार्थ कोवाकारः साधनवद्वृत्तिः साध्याभाव इति। साध्याभाववद्वृत्तित्वप्रकारकज्ञानं साधनधर्म्मिकव्याप्तिग्रह प्रतिवन्धकं, साधनवति साध्याभाव इति ज्ञानेऽपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतयानियमतो भासत इत्यभिप्रायेण। साधनवति साध्याभाव इति ज्ञानस्यासमानविशेष्यकस्यापि प्रतिवन्धकत्वमिति प्राचीनमताभिप्रायेणवेदं। दोष इति न पक्षत वच्छेदका भाववत् पक्षकत्वादिक मिति शेषः।

तथा चा लक्ष्यतावच्छेदकता व्याप्ति रिति भावः ननुपक्षतावच्छेदका-
भाववत् पक्षादीनां हेतुवृत्तित्वात् कथं हेतोर्दुष्टता, व्यवहार इत्यत
आह येनकेनापीति । एकज्ञानविषयत्वादिनेत्यादिः । तदानन्तदव-
च्छिन्नः, दुष्टः दुष्टपदप्रतिपाद्यः, तथाचहेतोः तादृशदोषानधिकर-
णत्वेऽपि नक्षतिः । दुष्टइत्यादौसामान्यतः सम्बन्धिन एवनिष्ठार्थ-
त्वात् नचैवमेकज्ञान विषयत्वादिनावह्न्यभाववद्ह्रदादिरूपदोषस्य
धूमादौसत्वेपि पर्वतादौवह्न्यादि साधनेतस्य दुष्टव्यवहारापत्ति
रितिवाच्यं यतस्तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहार
स्थले तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमिति प्रतिवन्धकतावच्छेदक
स्वावच्छिन्ननिरूपितविषयिताक धर्म्मावच्छिन्न सम्बन्धी दुष्टपदेन
बोध्यते ईदृश व्युत्पत्त्या पूर्व्वोत्तद्वारेणापि पूर्व्ववदेव वह्निनाधूम-
साधनेरासभो दुष्टइत्यादि व्यवहारोनिरुक्तदोषमात्रस्य दुष्टत्वव्यव-
हारविषयतावच्छेदकत्वे दुर्व्वार इति । प्रकृतहेतुतावच्छेदक
विशिष्ट सम्बन्धोनिष्ठार्थतावच्छेदकोवाच्य एतल्लाभाय प्रकृतोहेतु
रित्युक्तं । ह्रदेवह्नेः साधने धूमोदुष्टइत्यत्रह्रदत्वावच्छिन्नपक्षक
वह्नित्वावच्छिन्नसाध्यक धूमत्वावच्छिन्नलिङ्गकानुमिति प्रतिवन्धक-
तावच्छेदकस्वावच्छिन्नविषयिताक धर्म्मावच्छिन्न सम्बन्धीधूम
इत्यन्वयबोधः, तत्र प्रतिवन्धकतावच्छेदकस्वावच्छिन्नविषयिताक
धर्म्मविशिष्ट एव दुषधातोरर्थः । साधनपदं लक्षणया धूमत्वा-
वच्छिन्नहेतुकानुमितिपरं, तत्रह्रदइति सप्तम्यन्तार्थह्रदत्वावच्छिन्न-
पक्षकत्वस्य, वह्नेरितिषष्ठ्यन्तार्थस्यवह्नित्वावच्छिन्न साध्यकत्वस्य-
चान्वयः, तादृशानुमित्यन्वित सप्तम्यर्थ निरूपितत्वस्य दुषधात्वर्थे

कदेशेप्रतिबन्धकत्वेऽन्वयः। एवञ्च पर्व्वतेवह्नेःसाधने धूमोदुष्ट इत्यत्र पर्व्वतत्वावच्छिन्नपक्षकावह्नित्वावच्छिन्न साध्यकधूमत्वावच्छिन्नहेतुकानुमिति प्रतिबन्धकतावच्छेदक त्वावच्छिन्नविषयताक धर्म्मविशिष्ट सम्बन्धी धूमइत्येव प्रतीयते, तत्र तादृश धर्म्मस्या प्रसिद्ध एवेतिनतथा व्यवहारः। पक्षविशेषादिक मनन्तर्भाव्य धूमं दुष्ट इति व्यवहार स्त्वबाधित इष्यतएवेतिदिक्॥

साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेवव्यभिचारतया प्रसिद्धि र्नतुतद्विशिष्ट साधनादेरतोनतस्य दोषत्वमितिकश्चिदाह व्याचष्टे पि लक्षण मन्यथैवान्यथाति प्रसङ्गात् तादृशव्याख्यामुपन्य स्यति

**यादृश धर्म्मिणि, यादृशधर्म्मवत्ताज्ञान मनुमिति प्रतिबन्धकं, तद्धर्म्मिणा, स्तादृशधर्म्मवत्त्वं, हेतुदोष इत्यपि कश्चित्।**

यादृशेति। यद्रूपावच्छिन्नेत्यर्थकं। ज्ञानं, ज्ञानत्वावच्छिन्नं। तस्य धर्म्मिणा, स्तद्धर्म्मावच्छिन्नस्य, तेनसम्बन्धेनेति शेषः। तादृश धर्म्मवत्त्वं, तद्रूपावच्छिन्नधर्म्मवत्त्वं। साधनादिविशेषणक साध्याभाववद्वृत्तित्वादि विशिष्यक ज्ञानस्य सामान्यव्याप्त्यादिज्ञान प्रतिबन्धकत्वेपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिकं न दोषः, साधनादेः साध्याभाववद्वृत्तित्वादि धर्म्मताविरहात्। अत्रा प्यवच्छेदकत्वं पूर्व्ववत्तु स्वरूप सम्बन्ध विशेषः। पक्षतावच्छेदकावच्छिन्ननिष्ठ केवलाभावत्वावच्छिन्नवत्त्वादावति प्रसङ्गात्तदव-

च्छिन्नधर्म्मिकतद्रूपावच्छिन्नवत्ता ज्ञानत्वस्यापि प्रतिबन्धकताव-च्छेदक कोटि प्रविष्टत्वा दवच्छेदकतापर्य्याप्ति विवक्षणेतु ह्रदत्वावच्छिन्ननिष्ठवह्न्यभावत्वाद्यवच्छिन्नवत्त्वे ऽव्याप्तेः, वह्नि-त्वादिना घटाद्यवगाहिनोह्रदोनवह्निमानित्यादि निश्चयस्य ह्रदोवह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रदत्वावच्छिन्न विशेष्यक वास्तवह्न्यभावत्वावच्छिन्नप्रकारकनिश्चयत्वेन न प्रतिबन्धकता इति अपितुतद्विशेष्यकवह्नित्वावच्छिन्न प्रकारता निरूपिताभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैवातस्तादृश मेव रूपं प्रतिबन्धकतावच्छेदकता पर्य्याप्त्यधिकरणं, नतुह्रद-त्वावच्छिन्न धर्म्मिकवह्न्यभावत्वावच्छिन्न प्रकारकत्वमिति यद्रूप-पदेनवह्न्यभावत्वाद्युपादानं न सम्भवति, पर्व्वतोवह्न्यभाववानि-त्यादौपर्व्वतत्वावच्छिन्न निष्ठवह्नित्वावच्छिन्न रूपवाधादेरसंग्रहभये-न यद्रूपावच्छिन्न धर्म्मिणि यद्रूपावच्छिन्नप्रकारतानि रूपित यद्रूपावच्छिन्नप्रकारताक निश्चयत्वेन प्रतिबन्धकता तद्रूप विशिष्टे तद्रूपावच्छिन्न विशेषित तद्रूपावच्छिन्नवत्त्वं दोष इत्यादि विवक्षाया असम्भवात। अत साधननिष्ठसाध्याभाव वहृत्ति त्वादेरिवसाध्याभाववहृत्ति साधनादेरपिदोषत्वेक्षतिविरहात् एता-वानायासोऽनर्थक इत्यस्वरसः कश्चिदित्यनेन सूचितः॥

अथ पर्व्वतत्वेन पक्षत्वे, वह्नित्वेन साध्यत्वे, वि-शिष्टधूमत्वेन च हेतुत्वे, पर्व्वतादेः काञ्चनमयत्व विरहो, ह्रदस्य वह्निधूमशून्यत्वं, मेयत्वस्य केवलधूम-

स्य वा वह्निव्यभिचारो, विशिष्ट धूमस्य वा पर्व्वतीय-वह्नि व्यभिचारो नदोषः। न वा तत् सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वं, अतस्तद्धर्म्मावच्छिन्न तत् पक्षक तद्धर्म्मावच्छिन्न तत् साध्यक तद्धर्म्मावच्छिन्न तद्धेतुकानुमिति प्रतिबन्धकत्वं वाच्यम्।

यथा व्याख्यात यथा श्रुतार्थे निर्व्वह्निः पर्व्वतोवह्निमानित्यादौ प्रकृत पक्षतावच्छेदक विशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्न प्रकारकानुमितेर प्रसिद्ध्या ऽव्याप्तिर्दर्शयिष्यति, तत्रविशिष्य पक्षतावच्छेदकाद्य प्रवेशे ना प्रसिद्धिरतस्तन्निवेश प्रयोजन माह अथेति। पर्व्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्व्वत्र नदोष इति सम्बुध्यते। तथाचपक्षतावच्छेदकाद्य प्रवेशे पूर्व्वोक्त युक्त्या ऽसम्भवात् तद्वारणाय यत् किञ्चिद्धर्म्मावच्छिन्नपक्ष साध्य-हेतुकानुमितिसामान्य प्रतिबन्धकत्व मेव निवेश्य मिति पर्व्वतोवह्निमान धूमादित्यादौपर्व्वतादिनिष्ठकाञ्चनमयत्वा भावादावति व्याप्तिःतस्यापि काञ्चनमयत्वादि सहित पर्व्वतत्वादि रूपयत्किञ्चिद्धर्म्मावच्छिन्न पक्ष साध्यहेतुकानुमिति प्रतिबन्धक ज्ञानविषयत्वादितिभावः। आदिपदञ्च वस्त्वन्तर संग्राहकं। प्रकृतानुमित्यविषयपदार्थाभावे ऽति व्याप्तिं सूचयित्वातद्विषय साध्याद्यभावे, तां सूचयति ह्रदस्येति। ह्रदनिष्ठं वह्निशून्यत्वं धूमशून्यत्वञ्चेत्यर्थः। ह्रदादि निष्ठाभावेऽति व्याप्तिसूचनञ्च प्रकृतपक्षतावच्छेदकावच्छिन्न प्रकृत पक्षकत्वरूप समुदायदलस्यैवा निवेशे वोध्यं।

महानसीयेति महानसीय वह्न्यभावोमहानसीयधूमाभावोवेत्यर्थः अत्राति व्याप्तिसूचनञ्च प्रकृतसाध्यतावच्छेदक, प्रकृतहेतुतावच्छेदकयोरनिवेशेबोध्यं ॥

इदमुपलक्षणं साध्यहेत्वोरनिवेशेऽपिजलत्वाभावादावतिव्याप्ति र्बोध्या । प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे, पक्षधर्मताज्ञानप्रतिबन्धकतामादायाति व्याप्तिं सूचयित्वा, व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति । वह्नि व्यभिचारइत्यनेनान्वयः । अत्राति व्याप्ति स्त्वादृशदल समुदायस्यैव अनिवेशेबोध्या। प्रकृतहेतुकत्वनिवेशेपिएतद्दोषस्यशक्यवारणतयाहेतुतावच्छेदक निवेशनायाह केवलधूमस्येति । वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्त्तकविशेषणानवच्छिन्नेत्यर्थः । साध्यतावच्छेदकानिवेशे पूर्व्वं साध्यवत्ता ज्ञानविरोधिन्यतिव्याप्ति र्दर्शिता, इदानीं व्याप्तिज्ञानविरोधिन्यतिव्याप्तिं दर्शयति विशिष्टधूमस्यवा पर्व्वतीयवह्निव्यभिचार इति, दोष लक्षण इव दुष्ट लक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्यावश्यकतां दर्शयति नवातत् सम्बन्धेनेति । तत्रपर्व्वतत्वावच्छिन्ने, वह्नित्वावच्छिन्नवह्निसाधने । तस्य विशिष्टधूमत्वावच्छिन्नस्य । पक्षादौपक्षतावच्छेदकादेर्या दृश सम्बन्धेन विशेषणत्वं यत्राभिमतं तत्र तत् सम्बन्धेन तदवच्छिन्नत्वं निवेश्य मिति सूचयितुं तत्पक्षकेत्युक्तं, पक्षतावच्छेदकादि निवेशेपक्षादि निवेशस्या प्रयोजकत्वादिति । वाच्यं, तद्रूपावच्छिन्नपक्ष साध्यहेतुक दोष लक्षणे निवेशनीयं ।

तथा च निर्व्वह्निः पर्व्वतोवह्निमान् , पर्व्वता-वृत्ति वह्निमान् वा, तद्व्यभिचारिणः, पर्व्वतावृत्ते-र्व्वा धर्म्मादित्यादौ न कोपि हेत्वाभासः स्यात् तादृ-शानुमितेरप्रसिद्धत्वात् ।

तथाचेति, निर्व्वह्निः पर्व्वतोऽवह्निमान् इत्यत्र पक्षतावच्छेदक निर्व्वह्नित्व विशिष्ट पर्व्वते, वह्नि वैशिष्ट्यावगाहित्व मनुमितेर्न सम्भवति स्वविरोधिधर्म्मधर्म्मितावच्छेदकक स्वप्रकारकानाहार्य्यज्ञानस्यानभ्युप गमात् । पर्व्वतः पर्व्वतावृत्तिवह्निमान् इत्यत्र पर्व्वते पर्व्वतावृत्तित्व रूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्व मनुमितेर्न सम्भवति स्वस्मिन् स्वावृत्तित्वाद्यवच्छिन्न प्रकारकानाहार्य्यज्ञानस्याननुभविकत्वादेवं पर्व्वतो वह्निमान् वह्नि-व्यभिचारिण इत्यत्र वह्निव्यभिचारित्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्व वैशिष्ट्यावगाहित्व मनुमितेर्न सम्भवतीति पूर्व्वोक्त युक्तेः । पर्व्वतोवह्निमान् पर्व्वतावृत्तेरित्यत्र पर्व्वतेपर्व्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्न वैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति, यथाविवक्षितानुमित्य प्रसिद्धि प्रयोजकभेदेन नानास्थले ऽव्याप्ति कथनं । नकोपिहेत्वा-भासः स्यादिति, तथाचापार्थकरूपनिग्रहस्थानत्वेन तथाप्रयोक्तु निग्रहोपपत्तावपि, निर्व्वह्नित्वेन पर्व्वते वह्नेः साधने धूमोदुष्ट इत्यादि व्यवहारोदुरुपपाद इति भावः । तादृशानुमितिस्तथा

विवक्षितानुमितेः । अप्रसिद्धत्वादिति । आहार्य्य रोपज्ञानानुप-गमा दिति भावः ॥

अत्र वदन्ति यद्विषयकनिश्चयस्य विरोधि विषयता प्रयुक्त स्तदुत्तरमनुमितावनाहार्य्यं मानसज्ञाने वा, पक्षतावच्छेदकविशिष्टपक्षे, साध्यतावच्छेदक विशिष्ट साध्यवैशिष्ट्यावगाहित्वस्य, साध्यतावच्छेदक विशिष्ट साध्यनिरूपित व्याप्तिविशिष्टहेतुतावच्छेदक विशिष्ट हेतुमत्तावगाहित्वस्य च, द्वयोर्व्यतिरेकस्तत्त्वं हेतुदूषत्वं ।

यद्विषयकनिश्चयस्येति, यद्रूपावच्छिन्नविषयकनिश्चयस्येत्यर्थः । उत्तरपदञ्चउत्तरकालीनार्थकतया, तदुत्तर मिति धातूपस्थाप्यानुमिति रूप क्रियाविशेषण मतोद्वितीया । अग्रिमकल्पे तादृशज्ञान रूपक्रिया विशेषणं, अतोज्ञानपदमपिसार्थकं । तत् पदञ्च, तादृश निश्चय परामर्शकं । उत्तरपदञ्चा व्यवहितोत्तरार्थकं । कालाध्वनोरत्यन्तसंयोग इत्यनेनद्वितीयाधिकारे, उत्तरपदस्य उत्तरकाल परत्वादिति तु न युक्तं, व्यापकतात्मकस्यात्यन्तसंयोगस्य प्रकृतेऽविवक्षितत्वादिति । अनुमितौअनुमितिसामान्ये । द्वयोर्व्यतिरेक इत्यभि सम्बन्धः । तत्त्वं, तद्रूपावच्छिन्नत्वं । अत्र च तज्ज्ञानानन्तरज्ञानत्निष्ठ तादृशोभयाभावेतज्ज्ञानीयाया एव विरोधि विषयितायाः

प्रयोजकत्वात् विरोधि विषयितायां तादृश निश्चयीयत्व कथनं स्वरूप कीर्त्तन मात्रं, नतुतल्लक्षणघटकं। तथाच यद्रूपावच्छिन्न निश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधि विषयिता प्रयुक्तोभयाभाववत्त्वं, तादृशरूपावच्छिन्नत्वं दोषत्वमिति समुदितार्थः। वह्न्यभावविशिष्ट ह्रदत्वावच्छिन्न विषयक निश्चयानन्तरं ह्रदोवह्निमान् वह्निव्याप्य धूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुत्पत्त्या घटाद्यनुमितयएव तादृश निश्चयाव्यवहितोत्तरानुमिति सामान्यान्तर्गतास्तासुच ह्रदत्वादि विशिष्टे यत् वह्नित्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं, वह्नित्वावच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्यावगाहित्वञ्च, तदुभयाभाववत्त्वमक्षतमेव, तत्र तादृश निश्चयीय विरोधिविषयिताप्रयुक्तत्वमपि, स्वनिष्ठ प्रतिवन्धकतावच्छेदक धर्म्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिवध्यतावच्छेदक धर्म्माभाव प्रयोजकत्वात्, तत्रह्रदत्वादि विशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वादि विशिष्ट प्रकारकत्वावच्छिन्न प्रतिवध्यता निरूपित प्रतिवन्धकतावच्छेदकीभूताया, ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नवह्नित्वावच्छिन्नाभावीय प्रकारितायास्तादृशवह्नित्वादि विशिष्ट प्रकारकत्व घटितोभयाभावेतथात्वात्। नच तादृशविशिष्ट प्रकारकत्वमात्रं न विपरीत निश्चय प्रतिवध्यतावच्छेदकं, अपितुतद्विशेषितानाहार्य्य ज्ञानत्वं, तत् कथं तत्प्रकारकत्वाभावस्य तथाविध विरोधि विषयिता प्रयुक्तत्वमिति वाच्यं, विशिष्टाभाव प्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभाव प्रयोजकत्वात् अनाहार्य्यज्ञानत्वाद्याश्रयानुमिति निष्ठ तादृश विशिष्ट प्रकारकत्वा भावस्य, विरोधिविषयिता प्रयुक्तत्वाच्चतैरिति

ह्रदीवह्निमान् धूमादित्यादौ वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्ने लक्षण समन्वयः । निर्व्वह्निः पर्व्वतोवह्निमानित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत् पर्व्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्र प्रसिद्धपक्षतावच्छेदक विशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वघटितोभयाभाववत्त्वमक्षतमेवेति तत्र लक्षणसमन्वयः । न चाहार्य्यज्ञानमात्र प्रसिद्धस्य निर्व्वह्नि पर्व्वतत्वावच्छिन्नविशेष्यक वह्नि प्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतानवच्छेदकतया तादृशधर्म्मावच्छिन्ने वह्न्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वमप्रामाणिकमितिवाच्यं । तादृशज्ञानत्वस्य प्रतिबध्यतानवच्छेदकत्वेपि तद्व्यापकस्य पर्व्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्यैव वह्निविशिष्टपर्व्वतविषयकज्ञानप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभाव प्रयोजकतयातादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वाभावे तादृशदोषविषयिताप्रयुक्तत्वस्यावश्यकत्वात् । नचविरोधिज्ञानासत्त्वपि निर्व्वह्निः पर्व्वतोवह्निमानित्यादिज्ञानस्यानाहार्य्यस्यानुत्पत्त्या इच्छादि घटित तादृशाहार्य्यज्ञानसामग्र्यभावस्यैव निर्व्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं नतु विरोधिविषयित्वस्य, क्वचिदप्यक्लृप्तत्वादिति वाच्यं । अभावाधिकरणतायामेव विरोधिविषयताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतानात्माभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्

पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिर्गमना विरहेण पूर्व्वज्ञानीयविरोधिविषयितायां अपि प्रयोजकत्वात् ॥

यद्विरोधिविषयताप्रयुक्त स्तादृशोभयाभावस्तत्त्वमित्येतावन्मात्रे कृते ह्रदोवह्न्यभाववानित्यादिज्ञानीयवह्न्यभावादिविशिष्टह्रदादि-विषयितायां इव तदन्तःपातिवह्न्यभावत्वादि विशिष्ट विषयि-तायां अपि प्रतिवन्धकतावच्छेदककोटि प्रविष्टतया प्रतिवध्य-तावच्छेदकस्य ह्रदत्वादिविशिष्टे वह्न्यादि वैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया वाधाद्येकदेशे वह्न्यभावादिरूपविशिष्टेऽति-व्याप्तिरिति यद्विषयक निश्चयाव्यवहितोत्तरानुमिति सामान्यस्य विरोधिविषयिताप्रयुक्तोभयाभाववत्त्वं निवेशितं। नच यादृश विशिष्टविषयितासामान्यस्य प्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक् ह्रदत्वादिविशिष्टविषयितासामान्यान्तर्गतायां ह्रदइत्या-दि ज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरन-वकाशादितिवाच्यं। पाषाणमयोन वह्निमानिति ज्ञानसहि-तस्य पर्व्वतः पाषाणमय इतिज्ञानस्य पर्व्वतोवह्निमानितिज्ञान प्रतिवन्धकतया ज्ञानभेदेन विषयिताभेदाभावात् पाषाणमयत्व-विशिष्ट पर्व्वतादि विषयितासामान्यस्यैव उभयाभावप्रयोजक-त्वात् पाषाणमयत्वविशिष्ट पर्व्वतादावतिव्याप्तेर्दुर्व्वारत्वात्। ह्र-दोवह्न्यभाववानित्यादिह्रदादिविषयकनिश्चयानन्तरोत्पन्नघटाद्यनु-मितौ विरोधिविषयिताप्रयुक्तोभयाभावसत्त्वात् केवल ह्रदादा-वतिव्याप्तिरतः सामान्यपदं पूरणीयं। तथासति ह्रदादि निश्चयानन्तरोत्पन्नानुमिति सामान्यान्तर्गतायां ह्रद इत्या-

दिनिश्चयानन्तरजात ह्रदोवह्निमान् वह्निव्याप्यधूमवांश्चेत्या- द्यनुमितौ विरोधिविषयिताप्रयुक्ततादृशोभयाभावासत्त्वान्नाति- व्याप्तिः। ह्रदत्वादिना वह्न्यभावविशिष्ट ह्रदादिविषयक निश्चया- नन्तरमुक्तसमूहालम्बनानुमित्युत्पत्त्या तादृशविशिष्टस्यापि दोष- त्वानुपपत्तिरतोयत्पदं यद्रूपावच्छिन्नपरतयोपवर्णितं । वह्न्य- भावविशिष्ट ह्रदादिविषयकस्य ह्रदोवह्निमान्नवेत्यादि ज्ञान- स्यानन्तरं तादृश समूहालम्बनानुमित्युत्पत्त्या तद्दोषतादवस्थ मतो निश्चयेति। अनाहार्य्याप्रामाण्यज्ञानानास्कन्दित संशयान्य ज्ञान परं, तेनाहार्य्यस्याप्रामाण्यज्ञानास्कन्दितस्यापि दोष विषयकनिश्चयस्यानन्तरं तादृशानुमित्युत्पत्तावपि न क्षतिः। दोषविषयकनिश्चयनाशे सति तादृशानुमितेरुत्पत्त्या तद्दोषापत्ति- रतोऽव्यवधान निवेशः। एवं दोषविषयकलौकिकनिश्चयाव्यवहित पूर्व्वमनुमित्युत्पत्त्या तद्दोषः स्यादत उत्तरेति। तत्सामानाधिकर ण्यमनुमितौ निवेश्यमत एकस्य वाधनिश्चयानन्तरमन्यस्यानु- मितावपि न क्षतिः। वाधादिनिश्चयानन्तरं पक्षतावच्छेदका- वच्छिन्ने साध्यादिप्रकारकस्याहार्य्यस्य लौकिकस्य च प्रत्यक्षस्य उत्पत्त्या ज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः। यत् पक्षक यत्साध्यकयद्धेतुकस्थले यादृशदोषविषयकनिश्चया- नन्तरं कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्ध्या ऽव्याप्तिरतोऽनुमितिस्थलेऽनाहार्य्यदोषविशेषाजन्य ज्ञानं निवेश्य कल्पान्तरमाहानाहार्य्येति। तथाच यत्र तादृशानुमित्यप्रसि- द्धिस्तत्र तथा विद्यमानस्योपनीतभानादिकमादायैव लक्षणं सङ्ग-

मनीय मिति भावः । बाधादि निश्चयानन्तरं आहार्य्यं साध्यादिप्रकारकप्रत्यक्षोत्पत्त्याऽसम्भवोऽव्याप्तिर्व्वेत्यत आहानाहा-र्य्येति । शङ्खो न पीत इत्यादिनिश्चयानन्तरं शङ्खादौ पीतत्वा-दिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शङ्खःपीतः शङ्ख-त्वादित्यादिस्थलीयबाधादावव्याप्तिरतोमानसेति । मानसपदं दोषविशेषाजन्यज्ञानपरं, तेन नाहं गौर इत्यादिनिश्चयानन्त-मिथ्याज्ञानजन्यवासनादिरूपदोषविशेषजन्यात्मविशेष्यकगौरत्वादि-प्रकारकमानसज्ञानस्योत्पत्तावपि अहं गौरआत्मत्वादित्यादिस्थली-यबाधादौ नाव्याप्तिः । एतेन यादृशपक्षसाध्यहेतुक स्थले य द्विषयकनिश्चयानन्तरं विरोधिसामग्र्यादिवशेन मानस ज्ञानं कदापि न जातं तत्राव्याप्ति रित्यपि निरस्तं । तत्राप्यनुमिति शाब्दबोधादिकमादाय लक्षणगमनसम्भवात् । पक्षतावच्छे-दकेत्यादिदलद्वयनिवेशस्य व्यावृत्तिः पूर्व्वोक्तरीत्या बोध्या । विरो-धिविषयिताप्रयुक्तत्वनिवेशप्रयोजनं स्वयमेवाग्रे वक्ष्यति । यत्र विषयविशेषे समूहालम्बनज्ञानं न कस्यापि जातं तत्र पक्ष-तावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वविशिष्टसाध्यव्याप्ति-विशिष्टहेतुवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावाप्रसिद्ध्या ऽव्या-प्तिरतोविशिष्टाभावमुपेक्ष्योभयाभावनिवेशः कृतः । तादृशोभया-भावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्ट विषयकत्वव्यापकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यस्य सम्यक्त्वेऽपि यथासन्निवेशे न वैयर्थ्यं । ननुकाञ्चनमयः पर्व्वतोवह्निमानित्यादौ पक्षतावच्छे-दकविशिष्टपक्षाद्यप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्या-

कत्वेन नैकहेतुता विशेष्यविशेषणभावे विनिगमनाविरहादपि तु प्रत्येकं प्रकारतां निवेश्य हेतुताद्वयमेव कल्पनीयं इति नातिप्रसक्तिरिति वाच्यं हेतुताद्वयकल्पने यत्र व्याप्यवत्तानिश्चयस्य स्वांशेऽप्रामाण्यसंशयात्मकस्यानन्तरक्षणे व्याप्याभाववत्तानिश्चयस्तदुत्तरक्षणे व्यापकसंशयापत्तेः एतेन यावत्प्रकारतानिवेशनपक्षेऽपि तासां सव्यभिचारताघटकसम्बन्धावच्छिन्ननिरुक्तजनकतावच्छेदकप्रकारतानां न यावत्त्वेन निवेशः अपि तु निरुक्तजनकतावच्छेदकीभूता यावत्यः प्रकारताः सव्यभिचारताघटकसम्बन्धावच्छिन्नास्तासां प्रत्येकावच्छेदकरूपवत्त्वं निवेश्यं एवञ्च अयमात्माज्ञानादित्यादौ नोक्तक्रमेणातिव्याप्तिसम्भवः विषयतादिसम्बन्धावच्छिन्नज्ञानादिप्रकारतानामपि निरुक्तयावत्प्रकारतान्तर्गततया सव्यभिचारताघटकसम्बन्धावच्छिन्नत्वस्य तत्रासत्त्वेन तेन रूपेण तदुपादानासम्भवात् तथाच तावता व्याप्यसंशयहेतुतामादायाप्यतिप्रसङ्गवारणसम्भवेन ज्ञानपदस्य निश्चयपरत्वं न युक्तमिति पूर्व्वपक्षानवकाशः॥ अथवा व्याप्यसंशयस्य साधारणधर्म्मवत्ताज्ञानान्तर्भावमते एकैककोटिसामानाधिकरण्यमादाय सद्धेतावतिव्याप्तिवारणाय यत्किञ्चित् संशयजनकतावच्छेदकयावत् प्रकारतापर्य्यन्तं निवेशनीयम्। व्याप्यसंशयस्य पृथक्कारणतामते तु नोक्तक्रमेण सद्धेतावतिप्रसङ्गावकाशः तन्मते कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वेनैव प्रकारताया जनकतावच्छेदकत्वोपगमात् एकैककोटिसाहचर्य्यावच्छिन्नप्रकारतायाः संशयजनकतानवच्छेदकत्वात् अतो यावत्प्रकारता निवेशनं संशये

यत्किञ्चित्त्व*निवेशनञ्च न कर्त्तव्यमेव अपि तु व्याप्यसंशयहेतुता-मादायातिप्रसङ्गवारणाय ज्ञानपदमेव निश्चयपरमुपगन्तव्यमित्येव व्याप्यसंशयस्येत्यादिनाऽभिहितं। न च धर्म्मैक्यस्य संशयजनकतायां तन्त्रतामतेऽपि कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वं नैकत्रनिवे-श्यते विशेष्यविशेषणभावे विनिगमनाविरहात् अपितु प्रत्येक-सामानाधिकरण्यावच्छिन्नत्वं प्रत्येकं निवेश्य कारणताद्वयमेव कल्प्यते धूमसहचरितवह्निमत्त्वाज्ञानतदभावसहचरितवह्निमत्त्वा-ज्ञानत्वाद्यवच्छिन्नायाः परस्परसहकारित्वान्न कोटिद्वयसहचरित-विभिन्नधर्म्मवत्ताज्ञानात् संशयप्रसङ्गः धूमसहचरितवह्निमान् धूमा-भावसहचरितवह्निमानित्यादिज्ञानद्वयादितोऽपि संशयः स्वीक्रि-यत इति वाच्यं विभिन्नहेतुत्वे साहचर्य्यधर्म्मितावच्छेदकवह्नित्व-द्रव्यत्वादिधर्म्माणां विशेष्यानिवेशे कोटिद्वयसहचरितधर्म्मवत्ता-ज्ञानयोः परस्परसहकारितोपगमेऽपि विभिन्नधर्म्मवत्ताज्ञानात् संशयापत्तेर्दुर्व्वारतया तादृशधर्म्माणां विशिष्यनिवेशनीयतया कारणतानन्त्यापत्तेरिति संक्षेपः। अथ द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यत्र सद्धेतौ गुणत्वे सति सत्त्वादित्यत्रविरुद्धे चातिव्याप्तिः विशेष्ये साध्यतदभावोभयसामानाधिकरण्यसत्त्वेन विशिष्टेऽपि तत्स-त्त्वादिति चेन्न साध्यतदभाववद्वृत्तितावच्छेदकविशिष्टवत्ताज्ञानस्यैव साधारणधर्म्मदर्शनविधया साध्यसन्देहजनकत्वात् यत्किञ्चित् साध्य-

* प्रकारतायां यावत्त्वनिवेशे कृते एव संशये यत्किञ्चित्त्वनिवेशस्या-वश्यक इति भावः।

सन्देहजनकतावच्छेदकीभूता या या प्रकारतावच्छेदकता तत्त-द्वच्छेदकतापर्य्याप्त्यधिकरणधर्म्मविशिष्ट-प्रकृतहेतुतावच्छेदकवत्त्व-विवक्षयाऽतिप्रसङ्गविरहात् विशिष्टसत्तात्वरूपप्रकृतहेतुतावच्छेद-कस्य तदुभयवद्वृत्तितावच्छेदकत्वविरहात् उभयसहचरितवृत्ति-त्वावच्छिन्नप्रकारतावच्छेदकताज्ञानस्य संशायकत्वेऽपि नोक्तातिप्रसङ्गः तथा सति यादृशयादृशधर्म्मावच्छिन्नप्रकृतहेतुतावच्छे-दकविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन यत् किञ्चित् संशयजनकता तादृशतादृशरूपविशिष्टतद्वत्त्वस्य विवक्षणीयत्वात् यत्रोभयसह-चरितवृत्तित्वं प्रकारतावच्छेदके भासते तत्र तदुपलक्षितवत्ता-ज्ञानस्यापि हेतुतया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनाजनकत्वात् उभयवद्वृत्तितावच्छेदकत्वेन प्रकारतावच्छेदकस्य यत्रभानं तत्रोभय-सहचारघटकतदवच्छिन्ननिरूपिताधिकरणतावगाहिज्ञानस्यैव हेतु-तया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वमावश्यकं इति तादृशहेतुतामादाय साधारणे, उभयवद्वृत्तितानवच्छेदकविशिष्ट-वैशिष्ट्यबोधत्वेन हेतुतामादाय चासाधारणे लक्षणं सङ्गमनीयं इति सर्व्वसामञ्जस्यम् ॥ (इदं क्रोड़पत्रम्)

अथ द्रव्यं विशिष्टसत्त्वादित्यादेः सव्यभिचारताप्रसङ्गः विशि-ष्टस्यानतिरिक्ततया विशिष्टसत्त्वतत्त्वादौ साध्यतदभावसहचरितत्व-तत्सहचरितवृत्तित्वयोः सत्त्वादिति चेन्न गुणकर्म्मत्वादिसामाना-धिकरण्यरूपं तद्वैशिष्ट्यं हि क्वचिदुपलक्षणतया हेतुतावच्छेदकं क्वचिद्विशेषणतया, तत्राद्यं यथा अनुमित्यादिलक्षणप्रविष्टं इतर-

भेदानुमापकतावच्छेदकं तद्व्यक्तिसमवेतत्वादिकं तद्विशिष्टानुमितित्वादिजातेर्व्यक्त्यन्तरेऽसत्त्वेन भागासिद्धेस्तस्य विशेषणत्वायोगात् अत एव तादृशजातेरनुभवत्वान्यत्वादिविशेषणं व्यभिचारवारकतया सार्थकं द्वितीयस्तु यथा शब्दोऽनित्यो बाह्यकरणकप्रत्यक्षविषयत्वे सति सत्त्वादित्यादौ सत्यन्तार्थं तस्य विशेषणत्व एव सद्धेतुत्वनिर्व्वाहात् तथा च दर्शितस्य वैशिष्ट्यस्य उपलक्षणतया हेतुतावच्छेदकत्वे व्यभिचारित्वमिष्टमेव विशेषणत्वे च विशिष्टनिरूपितसमवायादिरेव हेतुतावच्छेदकसम्बन्धो बोध्यः अन्यथा यद्धर्म्मविशिष्टनिरूपितत्वानवच्छिन्नसमवायादिर्हेतुतावच्छेदकसम्बन्धः तस्य हेतुप्रकारस्य उपलक्षणतया हेतुतावच्छेदकत्वाद्विशेषणतानुपपत्तेः। न च विशिष्टनिरूपितसमवायादेर्हेतुतावच्छेदकसम्बन्धत्वे तेन सम्बन्धेन शुद्धसत्त्वादेरप्यव्यभिचारितया तद्विशेषणवैयर्थ्यमिति गुणकर्म्मान्यत्वे सति सत्त्वादिति हेतुप्रयोगे निग्रहप्रसङ्ग इति वाच्यं विशिष्टविशेषणकबुद्धावेव विशिष्टनिरूपितत्वस्य सम्बन्धावच्छेदकतया तद्रुपविशिष्टनिरूपितसमवायादिना तद्रूपानवच्छिन्नस्य हेतुत्वासम्भवात् एवञ्च विशिष्टनिरूपितसमवायादिना सम्बन्धेन सद्धेतोर्व्विशिष्टसत्त्वादेर्न तेन सम्बन्धेन सव्यभिचारताप्रसङ्गः। यादृशेन सम्बन्धेन पक्षधर्म्मताविषयकं यज्ज्ञानं तस्य तादृशेन सम्बन्धेन कोटिद्वयसहचारावगाहिताया: संशायकताप्रयोजकत्वात् तादृशसम्बन्धेन च द्रव्यत्वाद्यभावसाहचर्य्यस्य सत्त्वादावभावात् सामान्यसम्बन्धेन सहचारावगाहिनो विशेषसम्बन्धेन पक्षधर्म्मताज्ञानस्य

संशयकत्वे संयोगेन धूमधूमाभावसहचरितस्य वह्न्यादेर्महानसानु-
योगिकसंयोगादिना व्यभिचारितापसङ्गात् सामान्यसम्बन्धेन यत्
पक्षधर्म्मतायाः ज्ञानं तस्य तु विशेषसम्बन्धेन साहचर्य्यावगाहि-
त्वेऽपि संशयकत्वं विशेषभाने सामान्यस्यापि भानेन पक्षधर्म्मता-
घटकसम्बन्धेन साहचर्य्यस्य विषयत्वात् अनुमितिस्थले तु व्याप्ति
घटको यादृशः सम्बन्धस्तादृशेन पक्षधर्म्मताया भानमपेक्षितमिति
वैपरीत्यमित्यवधेयं। अथ यथा हेतुतावच्छेदकोपलक्षितव्याप्ति-
ज्ञानहेतुत्वस्थलेऽपि पक्षे तद्विशिष्टवैशिष्ट्यज्ञानादनुमितिरधिकन्त्वि-
त्यादिन्यायात् तथा विशिष्टसत्तालोपलक्षिते सहचारो यत्र गृह्यते
तत्र तद्विशिष्टवैशिष्ट्यस्य धर्म्मिणि ज्ञानादपि संशयोत्पत्तिरुचितेति
चेन्न उभयस्थलयोर्व्विशेषात् तथाहि सामान्यरूपेण सामान्यसम्बन्धेन
वा व्याप्तिग्रहे सामान्यघटितेन विशेषरूपेण विशेषसम्बन्धेन वा
पक्ष धर्म्मताज्ञाने तु न संशयः सङ्कोचस्य साधारण्यव्याघातकत्वात्
अत एव वह्नित्वादिना धूमतदभावादि सहचारग्रहे आर्द्रेन्धन-
प्रभववह्नित्वादिना धर्म्मिवृत्तिताभानान्न धूमादिसंशयः न वा
संयोगसामान्येन धूमतदभाव सहचरितवह्न्यादेर्महानसाद्यनुयोगिक-
संयोगेन धर्म्मिणि भानात्तत्संशयः न वा तत्र साधारण्यप्रसङ्गः।
प्रकृतपक्षधर्म्मताज्ञानानिवेशे घटज्ञानं सविषयकं आत्मवृत्ति वा
ज्ञानत्वादित्यादावतिव्याप्तिस्तथाहि घटज्ञानं सविषयकमित्यादि-
निश्चयकालीनघटज्ञानं सविषयकं न वेत्यादिसंशयं प्रति घटज्ञान-
धर्म्मिक सविषयकत्वज्ञानं प्रमाणं नवेत्याकारकसंशयो हेतुः अर्थ-

इदं सविषयकमात्मवृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्या-प्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषयकतया कोट्युप-स्थितिरूपस्य जनकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गशङ्कापि,

---

निश्चयोत्तरार्थसंशये तद्धर्म्मिकप्रामाण्यसंशयस्य हेतुत्वात् स च प्रामाण्यसंशयः सविषयकत्वतदभावादिरूपकोटिद्वयोपस्थित्यात्मकः सविषयकत्ववति सविषयकत्वप्रकारकत्वरूपप्रामाण्यस्य सविषयकत्वेन तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्य तदभावेन घटितत्वात् तादृशप्रामाण्यसंशये च सविषयकत्वादिज्ञानधर्म्मिकप्रामाण्याप्रामा-ण्यसहचरितज्ञानत्वादिमत्ताज्ञानं हेतुरिति सविषयकत्वादि-रूपसाध्यसन्देहजनककोटिद्वयोपस्थितिजनकधर्म्मवृत्तित्वज्ञानविषयत्वं ज्ञानत्वादावचतमेवेति प्रकृत पक्षताज्ञाननिवेश आवश्यकस्तन्निवेशे च सविषयकत्वादिज्ञानधर्म्मिकज्ञानत्ववत्ताज्ञानस्य तादृशज्ञानविषय-घटज्ञानादिरूपप्रकृतपक्षधर्म्मत्वाविषयत्वान्नातिव्याप्तिरिति मिश्रमतं दूषयति "इदं सविषयकमिति" सविषयकत्वस्य स्वरूपसम्बन्धात्म-कत्वेनाननुगततया तस्मिन् साध्ये ज्ञानत्वादिकं व्यभिचारीत्यत आह आत्मवृत्ति वेति अप्रामाण्यं भ्रमत्वं न तु प्रमात्वाभावस्तस्य साध्याभावाघटितत्वात् तज्जन्यकोट्युपस्थितेर्व्वेति मतभेदेन तज्ज्ञा-नस्य प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्त्वाज्ञानस्य तादृशसंशया-हेतुत्वात्* सविषयकत्वादिसंशयजनककोटिद्वयोपस्थित्यजनकत्वात् प्रामाण्यसंशयात्मककोटिद्वयोपस्थितिजनकत्वेऽपि प्रामाण्यसंशयस्य

---

* निश्चयधर्म्मिकाप्रामाण्यसंशयस्य कारणत्वमेव नास्तीति भावः।

साधारणधर्म्मवत्ताज्ञानस्य तज्जन्यकोट्युपस्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयाहेतुत्वात्। प्रामाण्यसंशयस्थले तु ज्ञानत्व-लक्षण साधारणधर्म्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मक-साधारणधर्म्मदर्शनाच्च विषये तद्वत्त्वस्य सन्देहः। अप्रामाण्यशङ्का-

---

कथितार्थसंशयहेतुताया अप्रामाणिकतया तादृशकोट्युपस्थितेः साध्यसंशयाहेतुत्वादिति भावः। ननु विनापि साधारणादिधर्म्म-ज्ञानं प्रामाण्यसंशयस्थले विषयसंशयोदयात् साधारणादिधर्म्मज्ञान-वत्प्रामाण्यसंशयस्यापि संशयजनकत्वमावश्यकमित्यत आह "प्रामाण्य-संशये"ति ज्ञानत्वलक्षणसामान्यधर्म्मदर्शनात् प्रामाण्याप्रामाण्यसह-चरितज्ञानत्ववत्ताज्ञानात् प्रामाण्यस्य सन्देह इति योजना एतच्च दृष्टान्तविधयोक्तं ज्ञानविषयतात्मकसाधारणधर्म्मदर्शनात्तत्प्रकारक-ज्ञानविशेष्यत्वरूपतत्तदभावसहचरितधर्म्मवत्ताज्ञानात् विषये घट-ज्ञानादौ तद्वत्त्वस्य सविषयकत्वादेः सन्देहः। तादृशधर्म्मवत्ता-ज्ञानासत्त्वे च संशयोऽसिद्ध एवेति भावः। नन्वेवमर्थनिश्चयदशायां सत्यपि साधारणधर्म्मादिज्ञाने प्रामाण्यसंशये सत्यर्थसंशयः असति तु तस्मिन्नेत्यन्वयव्यतिरेकानुविधानं नोपपद्यत इत्यत आह अप्रा-माण्यसंशयेति तदपसारणप्रयुक्तं तादृशविशिष्टप्रतिबन्धकाभाव-सम्पादकत्वनिबन्धनं तथाच प्रयोजकत्वेनैवान्वयव्यतिरेकानुविधानो-पपत्तेः न तत्कारणतासाधकमिति भावः व्याप्यसंशयस्येति व्याप्य-तदभावयोर्व्यापकतदभावसहचरिततया साधारणधर्म्मदर्शनविध-येव व्याप्यसंशयो व्यापकसंशयहेतुः धर्म्मैकताया ज्ञानस्य निश्चयता-

त्वन्वयानुविधानन्तु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारणप्रयुक्तमित्यस्याऽऽकरे व्यक्तत्वात्। व्याप्यवत्तासंशयस्य पृथग्व्यापकवत्तासंशयहेतुत्वपक्षे ज्ञानपदं निश्चयपरं हेत्वभिमतविशेषणन्तु येन सम्बन्धेन तदुभयसाहचर्य्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थं तेनात्मत्वकपालत्वादिसाध्यके समवायसम्बन्धेन हेतौ ज्ञानघटादौ विषयत्वसंयोगादिना तत्सन्देहजनके

---

त्वस्याप्रयोजकत्वात् यदा च व्याप्याभावस्य व्यापकाभावसाहचर्य्यं न प्रतिसन्धत्ते तदा धर्म्मिणि तद्व्याप्यधर्म्मं संशयानोऽपि न तं सन्दिग्धे इति स्वीयमते साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदकसाध्याभाववद्वृत्तित्वस्य व्याप्येऽसत्त्वेनातिव्याप्त्यनवकाशात् "पृथगि"ति हेतुत्वे विशेषणं पृथक्कारणतामते व्याप्यत्वमादायातिव्याप्तिः प्रागेवोपपादिता "ज्ञानपदं निश्चयपरमि"ति तादृशजनकतायां निश्चयत्वावच्छिन्नत्वं विशेषणं देयमित्यर्थः। सद्धेतावतिव्याप्तेर्व्वास्तवसाधारण्यादिमत्ताभावेनाप्रसक्तेः हेत्वभिमतपदोपादानमनर्थकमित्याशङ्कायामाह "हेत्विति" "तेन सम्बन्धेन" सव्यभिचारत्वघटकतयाऽभिमतसम्बन्धेन "जनकतासूचनार्थं" जनकताया लक्षणघटकतात्लाभार्थं तथाच तादृशपदोपादानस्वरसात् यादृशरूपावच्छिन्नयत्सम्बन्धावच्छिन्नप्रकारताशालिज्ञानं साध्यसन्देहजनकं तादृशरूपवान् तेन सम्बन्धेन सव्यभिचार इत्येवलक्षणं कर्त्तव्यमिति भावः। "समवायेन हेतौ" समवायेन व्याप्ये एतेनालक्ष्यत्वं दर्शितं ज्ञानघटादौ नातिप्रसङ्गः इति योजना न समवायेन सव्यभिचारत्वप्रसङ्ग इत्यर्थः।

नातिप्रसङ्ग इति। विप्रतिपत्तौ प्रत्येकं कोटिद्वयोपस्थापकत्वा-
भावात् लक्षणस्थद्वयपदेन तद्वारणात् मिलितस्य तदुपस्थापकत्वेऽपि

---

अतिप्रसङ्गप्रसञ्जकं विशेषणमाह विषयत्वसंयोगादिना "तत्सन्देह-
जनक" इति विषयत्वसंयोगादिसम्बन्धघटितसाध्यतदभावसाहचर्य्य-
प्रकारेण तादृशसम्बन्धेन स्वप्रकारकं यत् संशयजनकज्ञानं तद्विषय
इत्यर्थः। न च तेन सम्बन्धेन तद्वत्ताज्ञानस्य लक्षणघटकत्वेऽपि
समवायेन ज्ञानघटादिप्रकारकज्ञानमादायातिप्रसङ्ग इति वाच्यम्।
तेन सम्बन्धेन तद्वत्ताज्ञानस्य तत्सम्बन्धघटितसहचारविषयकस्यैव
संशयजनकतया समवायसम्बन्धावच्छिन्नायां संशयजनकतावच्छेदक-
प्रकारतायां समवायसम्बन्धघटितसाध्यतदभावसाहचर्य्यस्यैवावच्छेद-
कतया तद्वत्ताया ज्ञानघटादावसत्वेनातिव्याप्त्यनवकाशात् विप्रति-
पत्तिस्त्वित्यादिमूले तथापदस्य कोट्युपस्थापकपरत्वेऽसङ्गतिस्तद्-
घटकसाध्यतदभावोपस्थापकपदयोः प्रत्येकं प्रत्येकोपस्थापकत्वात्
प्रत्येकमतथात्वेऽपि वा कथं तत्र लक्षणासत्त्वमित्यपि नास्फुटमिति
तद्ग्रन्थमस्पृष्ट्वैव तदर्थं पूरयित्वा व्याचष्टे विप्रतिपत्तेरिति विप्रति-
पत्तिघटक तत्तत्पदज्ञानस्येत्यर्थः तत्तत्पदविषयकप्रत्येकज्ञानयोः
कोटिद्वयोपस्थापकत्वविरहेऽपि समूहालम्बनज्ञानस्य तथात्वात्तदा-
दायैवातिव्याप्तिर्भविष्यतीत्याशङ्कायां न वा पक्षवृत्तिरिति मूलाव-
तार इति सूचयितुं पूरणसम्बलितं तदर्थमाह "मिलितस्ये"ति
मिलितविषयकज्ञानस्येत्यर्थः। "तदुपस्थापकत्वेऽपि" कोटिद्वयोप-

तद्वत्ताज्ञानं न तथा न वा मिलिता द्वयोर्ज्जनकत्वं, तथात्वेऽपि वा येन सम्बन्धेन तद्वत्ताज्ञानमुभयकोट्युपस्थापकं तेन सम्बन्धेन हेतुत्वे अवश्यं सव्यभिचारत्वमिति।

---

स्थापकत्वेऽपि "तद्वत्ताज्ञानं" तादृशवाक्यप्रकारताशालिज्ञानत्वावच्छिन्नं "तथा" कोटिद्वयोपस्थापकं तथाच पक्षधर्म्मतापदोपादानादेव न तत्रातिव्याप्तिरिति भावः पक्षधर्म्मतापदानुपादानेऽपि न तत्रातिव्याप्तिः सम्भवति पदद्वयविषयकज्ञानस्य कोटिद्वयोपस्थिति जनकत्वेऽपि विषयभेदेन विषयताभेदान्नित्यपद नञ्पदविषयतयोः प्रत्येकं कोटिद्वयोपस्थितिजनकतावच्छेदकत्वविरहाल्लक्षणे च कोटिद्वयोपस्थितिजनकतावच्छेदकैकविषयताया एव निवेशादित्याह "न वेति" "मिलिता" एकविषयताश्रयीभूतद्वयोः पदयोः जनकत्वं जनकतावच्छेदकत्वं कोटिद्वयोपस्थितिजनकतावच्छेदकीभूता या विषयता तदाश्रयत्वमिति पर्य्यवसितार्थः। ननु विप्रतिपत्तिघटकपदानां प्रतिपाद्यत्वादिसम्बन्धेन कोटिद्वयसहचरिततया तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयहेतुत्वात्तेषां प्रत्येकं सन्देहजनककोटिद्वयोपस्थितिजनकतावच्छेदकविषयताश्रयत्वमक्षतमेवेत्यत आह "तथात्वेऽपी"ति विप्रतिपत्तिघटक पदानां प्रत्येकं तादृश विषयताश्रयत्वेऽपीत्यर्थः अवश्यं सव्यभिचारत्वमिति तथाच लक्ष्यतयैव न तत्रातिव्याप्तिरिति भावः। ननु अनुपसंहारी पक्ष एवेति मूलमसङ्गतं सम्बन्धनिश्चयस्यैव सम्बन्धिस्मारकतया पक्षे साध्यस्य तदभावस्य सन्दिग्धतया तदन्तर्भावेन हेतौ तत्सामानाधिकरण्यस्य निश्चेतुमशक्यत्वेन हेतोः कोटिद्वयोपस्थापकत्वासम्भवाद-

अनुपसंहारी पक्ष एवेति अनुपसंहारितादशायां साध्यतदभाव-सहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षण-समन्वय इति भावः। केचित्तु व्याप्त्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात् तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिञ्चित्करं गौरवात्, तथाच

---

तोऽभिप्रायं व्याचष्टे "अनुपसंहारीति" "अनुपसंहारितादशायां" पक्षे साध्यसन्देहदशायां उक्तक्रमेण लक्षणसमन्वय इति योजना यद्रूपविशिष्टवत्ताज्ञानं साध्यसन्देहजनकं वास्तवतद्रुपवत्त्वस्यैव लक्षणार्थतया उपवर्णितत्वात् सर्व्वमनित्यं प्रमेयत्वादित्यादौ पक्ष एव क्वचित्साध्यस्य क्वचिच्च साध्याभावस्य निश्चयदशायां नित्यत्व तदभाव-सहचरितप्रमेयत्ववत् सर्व्वमित्यादिज्ञानस्य सम्भवेन तद्विषयताव-च्छेदकोभयसाहचर्य्यमादाय साध्यसन्देहदशायामपि लक्षणसमन्वय इत्यर्थः। अनुपसंहारितोत्तीर्णतादशायां तदुभयसाहचर्य्यत्वेऽपि तदानीं तादृशहेतोः साधारणतया न सामान्यलक्षणातिव्याप्तिरिति भावः साधारण्यविषयकज्ञानत्वावच्छिन्नस्यैव संशयान्वयव्यतिरेकानु-विधायित्वात्तेनैव रूपेण संशयहेतुता न तु तद्विषयकनिश्चयत्वेन, तदवच्छिन्नस्यान्वयव्यतिरेकानुविधायितायाः असिद्धत्वात् तथाच सन्देहकाले साहचर्य्यनिश्चयासम्भवेऽपि तदंशे संशयात्मकसंशय-जनकज्ञानमादाय लक्षणसमन्वयः सम्भवतीति केचिदाऊस्तन्मत-मुपन्यस्यति "केचित्त्वि"ति "वस्तुतः साधारण्यज्ञानेऽपि" वस्तुगत्या यत्साधारणं तज्ज्ञानेऽपि तत्र तद्गततायां "अकिञ्चित्करं" नय-

पक्ष एव तत्संशयात्मकतदुभयसाहचर्य्यज्ञानाद्भवति तथात्वमिति भाव इत्याहुः। तच्चिन्त्यम्। ननु केवलान्वयिसाध्यकानुपसंहारिणि साध्याभावाप्रसिद्ध्या तत्संशयाद्यभावादव्याप्तिः, एवं यत्र स्थिरे

---

वच्छेदकं "पक्षएव" पक्षान्तर्भावेनैव 'तत्संशयेति" साहचर्य्यांशे संशयेत्यर्थः "साहचर्य्यज्ञानात्" साहचर्य्यविशिष्टप्रकारकज्ञानात् "तथात्वं" सव्यभिचारत्वं तच्चिन्त्यमिति सम्बन्धांशे निश्चयात्मकसम्बन्धिज्ञानं सम्बन्धान्तरस्मारकं शङ्क्यादिसंशयात् पदार्थस्मरणाद्यनुत्पत्तेरिति साधारणसंशयस्य कोट्युपस्थापकत्वं न सम्भवति एवं संशयसाधारणसहचारज्ञानस्य हेतुत्वेऽप्रामाण्यनिश्चयानास्कन्दितत्वमेवावच्छेदककोटौ निविशते तन्निश्चयत्वेन हेतुत्वे तु अप्रामाण्यज्ञानानास्कन्दितत्वमेवेति लाघवात् संशयात्मकज्ञानं न हेतुः। एवं अनुपसंहारितादशायां संशयजनकज्ञानसम्पादनप्रयासो विफलः तादृशज्ञानासत्त्वदशायां साधारणाव्याप्तिभयेन तादृशज्ञानस्योपलक्षणविधयैव लक्षणघटकत्वादितिचिन्तावीजमूहनीयम्। केवलान्वयीत्यादि मूलमवतारयति नन्वित्यादिना अयं घटः एतत्त्वादित्यादिस्थले पक्षतादशायां संशयप्रयोजकनिश्चितसाध्यतदभाववद्वृत्तित्वस्य सत्त्वाव्याप्त्यप्रसक्तेस्तस्य लक्ष्यतया अव्याप्तिपरिहारो न सङ्गच्छते इत्यतस्तत्र निश्चितसाध्यवद्वृत्तित्वं सम्पादयति "एवमिति" हेतुभूतेदन्त्ववति पूर्व्वं घटत्वग्रह एव तन्मूलकात् स घट इत्याकारकस्मरणात्तद्घटत्वेन तद्घटभेदोऽत्र घटे ग्रहीतुं शक्यते नान्यथाप्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानविरहादिति धर्म्मिणि-

धर्म्मिणि पूर्व्वं घटत्वं गृहीतं उत्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभवद्धर्म्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुतस्तद्व्यावृत्त-

---

पूर्व्वं घटत्वग्रहस्यानुसरणं तद्घटभिन्नोऽयमिति भ्रमपर्य्यन्तं तद्घटानवस्थाने तादृशभ्रम एव न सम्भवति विशेष्यविरहादतः "स्थिर" इत्युक्तं तद्घटभिन्नोऽयमिति भ्रमदशायां इदन्त्वावच्छिन्ने घटत्वग्रहे इदन्त्वस्य साध्यसहचरितत्वेन निश्चिततया असाधारण्यं न शङ्कास्पदमपीत्यत आह "तत्रैव दोषात् घटत्वाग्रह" इति तत्र इदन्त्वावच्छिन्ने तद्घटभिन्नोऽयमिति भ्रमानुधावनं इदन्त्वस्य निश्चितसाध्यवद्धर्म्मिव्यावृत्तत्वज्ञानसम्पादनाय, तदा धर्म्मिणि घटत्वनिश्चयसत्त्व एव संशयप्रयोजकस्य तत्कालीनतत्पुरुषीयसाध्यनिश्चयविषयव्यावृत्तस्य इदन्त्वे असत्त्वं अतः केवलतद्व्यक्तित्वेन प्रतियोगिविधया तद्घटभानमुपेक्ष्य तद्घटत्वेन तज्ज्ञानानुसरणं तथाच सति तादृशभ्रम एव तद्व्यक्तित्वविशिष्टधर्म्मिणि घटत्वस्य निश्चय इति तन्निष्ठेदन्त्वे दर्शितसंशयप्रयोजकरूपाभावादव्याप्तिप्रसक्तिः इदन्त्वविशिष्टे घटसामान्यभेदभ्रमे इदन्त्वेऽपि विपक्षवृत्तित्वनिश्चयसम्भवाद्व्यावृत्तत्वज्ञानासम्भवादसाधारण्यं न शङ्कास्पदमपीति प्रतियोगिकोटौ तत्तद्भानानुधावनं "इदन्त्वेपी"ति अव्याप्तिरित्यनुषज्यते। "वस्तुतस्तद्व्यावृत्तत्वाभावेन" वास्तविकस्य साध्यनिश्चयविषयीभूतधर्म्मिव्यावृत्तत्वस्याभावेन "लक्षणायोगादि"ति वास्तवसंशयप्रयोजकरूपवत्त्वस्य लक्षणघटकत्वादिति भावः। अतएवेत्यत्र इदम् पदेन पूर्व्वाभि-

केवलान्वयिसाध्यकानुपसंहारी अयं घट एतत्वादित्यसाधारणश्च सद्धेतुरेव, तदज्ञानं दोषः पुरुषस्य। अत एवासाधारणप्रकरणसमयोरनित्यदोषत्वम्। अन्यथा

---

लाभावेन तत्र लक्षणायोगादित्यतस्तयोर्लक्ष्यत्वाभावेन परिहरति केवलान्वयीति। अतएवेति। यत एव पुरुषदोषाधीनं तद्दोषत्वम्, अतएव तस्यानित्यदोषत्वं, साहजिकत्वे कादाचित्कत्वानुपपत्तेः। एवञ्च यत्र दोषताप्रयोजकं वस्तुतो हेतौ तत्रानित्यदोषत्वमपि,

---

हिताया: सद्धेतुत्वाज्ञानस्य पुरुषदोषतायाः परामर्शेऽसङ्गतिस्तस्यासाधारण्यादेरनित्यदोषतायामनुपष्टम्भकत्वादतस्तत्परामर्शनीयं व्याचष्टे "अत एवे"ति "पुरुषदोषाधीनं" पुरुषस्य "हेतुमति" पक्षे च साध्यसाध्याभावानिश्चयसाध्य* तदभावव्याप्यवत्ताभ्रमाधीनं† "तद्दोषत्वं" हेतोरसाधारण्यसत्प्रतिपक्षरूपदोषत्वं "तस्य" असाधारण्यस्य सत्प्रतिपक्षस्य च "अनित्यदोषत्वं" दशाविशेष एव हेतोर्दुष्टतासम्पादकत्वं "साहजिकत्वे" तादृशपुरुषदोषविरहदशायामपि हेतोर्दुष्टतासम्पादकत्वे "कादाचित्कत्वं" कदाचिदेव हेतोर्दुष्टता सम्पादकत्वं एतावता अयं घट एतत्वादित्यादौ दशाविशेषे पुरुषदोषाधीनदुष्टत्वशङ्काया अनिवृत्तेस्तन्निवृत्त्यर्थं अन्यथेत्यादिग्रन्थसङ्गमनाय च अभिप्रायं पूरयति "एवञ्चेति" "दोषताप्रयोजकं" निश्चितसाध्य-

---

* हेतुमतिसाध्यतदभावानिश्चयः। पक्षे च साध्यतदभाव व्याप्यवत्ता निश्चयः इति यथा संख्यमन्वयः॥

† ख० साध्यतदभावानिश्चय साध्याभाव व्याप्यवत्ताभ्रमाधीनं।

यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि, भ्रममात्राद्दुष्टत्वेऽतिप्रसङ्ग-माह अन्यथेति केचित्। परे तु अयं घटः एतत्वादित्यादाव-व्याप्तिः। साध्यसन्देहप्रयोजकं हि तस्य साध्यतदभाववद्व्यावृत्तत्वं नह्येकस्य धर्म्मस्य तदुभयव्यावृत्तत्वं सम्भवति असाधारण्यन्तु तस्य पक्षमात्रवृत्तितया अतस्तस्यालक्ष्यतयोत्तरयति अयं घट इत्यादि। एवञ्चावृत्ति गगनादिकमेवासाधारणं पक्षवृत्तित्वभ्रमदशायाञ्चा-

---

वद्व्यावृत्तत्वादिकं "हेतौ" तिष्ठतीतिशेषः "तत्रानित्यदोषत्वमपि" तत्रैव अनित्यदोषत्वं, भ्रमो दोषताप्रयोजकरूपस्य अन्यथापदार्थं व्याचष्टे "भ्रममात्रा"दिति तादृशरूपभ्रमादित्यर्थः। "केचि"-दित्यस्वरससूचनाय स च निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशय-प्रयोजकतया अग्रे खण्डनीयत्वात् असाधारण्यादेः पुरुषदोषा-धीनतायाः प्रकृतानुपयोगितया मूलानुक्ततया च अतएवेत्यत्र इदम्पदेन तत्परामर्शे सन्दर्भविरोधाच्च "तस्य" "असाधारणस्य", "धर्म्मस्य" वृत्तिमतः। ननु तादृशहेतोः संशयप्रयोजकरूपशून्यत्वे-ऽसाधारण्यमेव कथं वीजाभावादित्यत आह "असाधारण्यन्त्वि"ति "अतः" इत्याशङ्कातः नन्वयं घट एतत्वादित्यादेरिव तुल्ययुक्त्या शब्दोऽनित्यः शब्दत्वादित्यादेरपि सद्धेतुत्वमेव शब्दोनित्यः शब्द-त्वादिकमपि विरुद्धमेव नत्वसाधारणं साध्याभाववद्व्यावृत्तत्वाभावा-दित्युदाहरणाभावादसाधारणहेत्वाभासस्यैवाप्रसिद्धिरित्यत आह एवञ्चेति "अवृत्तीति" वृत्तिमतः साध्यतदभाववद्व्यावृत्तत्वासम्भवा-दितिभावः। ननु पक्षधर्म्मताज्ञानविरहादेव गगनादिहेतुकस्थले-

साधारण्यस्यासङ्करः। न चोभयव्यावृत्तत्ववृत्तिमत्त्वयोः स्वरूपतो विरोधः, निश्चितसाध्यतदभाववद्व्यावृत्तत्वञ्च न सन्देहप्रयोजकं, तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे

ऽनुमित्यनुत्पादनिर्व्वाहादसाधारण्यज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वमेव नास्तीति कथं तस्य हेत्वाभासतेत्यत आह "पक्षवृत्तित्वेति" "असङ्करः"* इतरानधीनानुत्पादप्रयोजकज्ञानविषयत्वं। ननूभयव्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धतया तदुभयज्ञानस्य नैकदासम्भवः, मिथः प्रतिबन्धकत्वात् न चैवं पक्षधर्मताज्ञानाभावसम्पादकतयैव तस्य हेत्वाभासत्वं निष्प्रत्यूहमितिवाच्यं तथा सति असिद्धावेवान्तर्भावेन सव्यभिचारत्वानुपपत्तेः अतआह "न चोभयेति" "स्वरूपतो विरोधः" परस्पराभावव्याप्यत्वाविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वं वास्तवविरुद्धविषयकस्यापि ज्ञानस्य विरोधाविषयकस्याप्रतिबन्धकत्वादितिभावः, ननु निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपसंशयप्रयोजकधर्मस्योक्तहेतौ सत्त्वात् कथं तत्राव्याप्तिशङ्का कथं वा अलक्ष्यत्वाभ्युपगमेन तत्परीहार इत्यत आह "निश्चितेति" साध्यतदभावनिश्चयविषयीभूतधर्म्मिव्यावृत्तत्वं न साध्यसन्देहजनकतावच्छेदकविषयतावच्छेदकमित्यर्थः "निश्चितसाध्यतदभाववद्वृत्तित्वस्य" साध्यतदभावनिश्चयविषयवृत्तित्वस्य "तथात्वे" संशयप्रयोजकत्वे "वह्नेतौ" वह्न्यधिकरणवृत्तितया निश्चिते धूमादौ, धर्म्मिवृत्तित्वग्रहदशापर्य्यन्तानुधावनं संशयजनकज्ञानस्य विशेषण-

---

* ख०, असङ्करानधीनानुत्पादप्रयोजकज्ञानविषयत्वं।

सद्धेतौ बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः। न च प्रमेयत्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यत्र च साधारणोऽव्याप्तिः तयोः साध्यवद्वृत्तित्वेन विरुद्धत्वादिति चेत्। न। एतद्ज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादुद्भावनाच्च स्वपरानुमिति प्रतिबन्धात्, उद्भावितैतन्निर्व्वाहार्थं साधारणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च। एतेन पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिरनैकान्तिकः सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्वञ्चानुमितिविरोधि, तत्सम्बन्धः प्रत्येकमस्ति, विरुद्धोऽप्यनेन रूपेण सव्यभिचार एव, उपाधेश्च न सङ्कर इति वक्ष्यत इति निरस्तम्।

---

सद्धेतावपि साध्याभाववत्त्वभ्रमविषयवृत्तित्वग्रहदशायामतिप्रसङ्गात्। न च तादृशनिश्चयविषयस्य धर्म्मिणो वास्तवं साध्याभावादिमत्त्वमपि तन्त्रं, मानाभावात्, किञ्च सन्देहजनकतावच्छेदकरूपस्य विशेषणत्वे

---

विधयालक्षणघटकत्वेऽप्यतिव्याप्तिः सम्भवतीत्यभिप्रायेण, वस्तुतो यदा हेतुमति साध्याभावभ्रमो न वर्त्तते तदा हेतौ तदधिकरणवृत्तित्वापत्तेऽप्यतिव्याप्तिःसम्भवति। तादृशज्ञानस्योपलक्षणत्वादिति ध्येयं। "तादृशे"ति साध्यतदभावविषयकेत्यर्थः "तन्त्रं" संशयप्रयोजकरूपघटकं, "सन्देहजनकतावच्छेदकस्य" जनकतावच्छेदकप्रकार-

व्यभिचारिणि रासभादौ महानसादिवृत्तितादृशायामव्याप्तिः, उपलक्षणत्वे असाधारण्योत्तीर्णतादृशायामतिव्याप्तिः असाधारणप्रक-

---

तावच्छेदकस्य "विशेषणत्वे" धर्म्मिविशेषणतया दुष्टादिपदप्रतिपाद्यत्वे महानसादिवृत्तितादृशायामव्याप्तिः तत्कालान्तर्भावेनादुष्टत्वव्यवहारापत्तिः, तदानीं साध्याभाववद्वृत्तित्वाभावस्य तत्त्वाचत्वात् तादृशव्यवहारविषयस्याबाधितत्वादिति भावः। न च द्रव्यं विशिष्टसत्त्वादित्यादावतिव्याप्तिवारणाय साध्यसन्देहजनकतावच्छेदकप्रकारकतावच्छेदकतावच्छेदकधर्म्मवत् प्रकृतहेतुतावच्छेदकत्वमेव व्यभिचारपदार्थो वाच्यः साधारण्यस्थले च तादृशो धर्म्मः साध्यतदभाववृत्तितावच्छेदकत्वमेव तद्विशिष्टहेतुतावच्छेदकावच्छिन्नहेतुमत्ताज्ञानस्यापि सन्देहजनकतोपगमात् एवञ्च रासभादेर्महानसादिवृत्तितादशायां वह्न्यभाववद्वृत्तित्वविरहेऽपि तदवच्छेदकरासभत्वादिमत्त्वेन तादृशव्यभिचाराभावो नास्ति इति कथमुक्तव्यवहारापत्तिरिति वाच्यं एवमप्यनित्यधर्म्मस्य हेतुतावच्छेदकत्वे तदसत्त्वदशायामापत्तितादवस्थ्यात् विशेषणत्वे कालविशेषावच्छिन्नतया तदानीं दुष्ट इत्यादौ दुष्टादिपदप्रतिपाद्यत्वेऽव्याप्तिः तत्कालान्तर्भावेन दुष्टव्यवहारानुपपत्तिरिति तु नार्थः साधारण्यस्य नित्यदोषतया कालविशेषान्तर्भावेन दुष्टत्वव्यवहाराजनकतायास्तत्त्वेष्टत्वात् "उपलक्षणत्वे" अत्यन्तायोगव्यवच्छेदपरिचायकतया दुष्टादिपदप्रतिपाद्यत्वे तादृशरूपात्यन्तायोगव्यवच्छेदस्य दोषादिपदार्थत्वोपगम इति यावत् "असाधारण्योत्तीर्णतादशायां"

हेतुमति साध्यतदभावयोरन्यतरनिश्चयदशायां, तत्कालान्तर्भावे नातिव्याप्तिः कालान्तरीणासाधारण्यमादाय दुष्टत्वादिव्यवहारापत्तिः। इदं पुनरवधेयं शब्दोऽनित्यःशब्दत्वादित्यादौ पक्षतादशायां दुष्टत्वादिव्यवहारनियामकं यद्घटगगनादिव्यावृत्तत्वरूपमसाधारण्यं तच्छब्दादौ साध्यादिनिश्चयदशायामप्यक्षतमेवेति विशेषणत्वेऽप्येतद्दोषतादवस्थ्यं* संशयप्रयोजकत्वरूपस्य तथात्वेन न दोषादिपदप्रतिपाद्यता किन्तु साध्यतदभाववद्वृत्तित्वनिश्चितसाध्यतदभाववद्व्यावृत्तत्वस्वरूपेणैव† निश्चयघटितरूपावच्छिन्नपरवाक्याच्च कालविशेषो निश्चयांश एवान्वेति साध्यतदभावनिश्चयादौ खण्डशक्तिस्वीकारेणान्वयबलात् साध्यतदभावनिश्चयविषयवृत्तित्वसामान्याभावभिन्नस्यापि तत्कालीनतन्निश्चयविषयवृत्तित्वत्वावच्छिन्नाभावस्य लाभः दोषादिपदानां एवं नानार्थत्वमिष्टमेवेति चेदुच्यते तदोपलक्षणत्वेऽपि नोक्तदोषावकाश इति। एवञ्च निश्चयाघटितसाध्यतदभाववद्व्यावृत्तत्वमेव संशयप्रयोजकं तदवच्छिन्नप्रकारकज्ञानस्य विशेषदर्शनतया संशयप्रतिबन्धकत्वेऽपि तत्कोटिविशिष्टबुद्धौ तत्कोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानप्रतिबन्धकतायां विपरीतकोटिमद्व्यावृत्तत्वाच्छिन्नप्रकारकज्ञानस्योत्तेजकतया सत्प्रतिपक्षस्थल इव संशयनिर्व्वाहः तथाचायं घट एतत्वादित्यादौ

---

* संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्याप्त्याधिकरणरूपवत्त्वेनेत्यर्थः।

† विभाजकमात्रमुक्तानुगतरूपं एवञ्च साधारण्यमुपलक्ष्यणं असाधारण्यञ्च विशेषणमित्यत्राविरोधः।

रणसमयोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्वं विशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्वं न तु वास्तवं हेतुदोषत्वम्, अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतुदोषत्वे इत्याहुः।

---

साध्यतदभाववद्व्यावृत्तत्वस्यासत्त्वेनाव्याप्त्याशङ्कायां अलक्ष्यत्वाभ्युपगमेन तत्परिहारस्य च नासङ्गतिरिति समुदिततात्पर्य्यार्थः। संशयप्रयोजकरूपञ्च इदानीमुपलक्षणविधयैव दुष्टव्यवहारनियामकं अतो रासभादौ महानसादिवृत्तितादशायां नाव्याप्तिः। असाधारणश्च हेतुः सर्व्वदैव तथेति नातिप्रसङ्गोऽपीति ध्येयं। अदुष्टहेतोर्व्वास्तवासाधारणप्रकरणसमत्वाभावात् "असाधारणप्रकरणसमयो"-रिति व्याचष्टे असाधारणेति भ्रमविषयस्य नव्यमते दोषत्वाभावादनित्यदोषत्वमिति व्याचष्टे "विशेषेति" "प्रयोजकत्वं" प्रयोजकज्ञानविषयत्वं अत एवेत्यत्र इदमपदार्थस्य सद्धेतोः सर्व्वदा अदुष्टत्वस्य भ्रमविषयस्यानुमित्यनुत्पादप्रयोजकतायामनुपष्टम्भकतया तदुपष्टम्भं पूरयति "नत्विति" तथाच यत एव सद्धेतुः सर्व्वदैव तथा न तु कदाचिदपि दुष्टलक्षणलक्ष्यः अतएव तत्स्थलीयानुमितिविरोधी यो भ्रमरूपो ग्रहस्तस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि तद्विषयो न हेतुदोषः भ्रमदशायां सद्धेतोर्दुष्टत्वे तु भ्रमविषयस्य दोषत्वमावश्यकं स्यादित्यत एवेत्यादिमूलस्य पर्य्यवसितोऽर्थः। ननु भ्रमस्यानुमित्यनुत्पादप्रयोजकत्वे तद्विषयस्य दोषत्वमपीष्यत एवेति भ्रमविषयो न दोष इत्येवासिद्धमित्याशङ्कायामन्यथेत्यादि मूलावतारात्तादृशशङ्कोद्धारं स्फुटीचिकीर्षुरन्यथापदं व्याचष्टे "अन्यथेति" मूले

अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया विरु-द्धत्वमेव तयोरिति। इदञ्चाभ्युपगमवादेन। वस्तुतो यथोपवर्णित-

---

बाधादिज्ञान इति पक्षविशेष्यकसाध्याभावादिभ्रमदशायामित्यर्थः हेत्वाभासाधिक्यापत्तिः अतिरिक्तहेत्वाभासस्वीकारापत्तिः बाधा-देर्नित्यदोषतायाः सर्व्ववादिसिद्धतया भ्रमविषयस्य तदन्तर्भावा-सम्भवादितिभावः। अभेदे साध्ये प्रमेयत्वस्य अनित्यत्वे साध्ये शब्दाकाशान्यतरत्वस्य च वास्तवसाध्यवद्वृत्तित्वविरहेण विरुद्धत्वा-सम्भवात्प्राचीनमताभिप्रायकतया तयोर्विरुद्धत्वोक्तिमुपपादयति दीधितौ "अनवगते"ति एवञ्च साध्यवद्वृत्तित्वेनेतिमूलस्य साध्य-वद्वृत्तितया अनवगतत्वेनेत्यर्थः तादृशस्थले पक्षतादशायां हेतौ साध्यतदभावोभयसहचारस्याशक्यनिर्णयत्वेऽपि कालान्तरीणनिर्णय-विषयवास्तवतदुभयसहचारमादाय लक्षणगमनसम्भवादलक्ष्यतया-ऽव्याप्तिपरिहारो न घटते इत्यत आह "अभ्युपगमवादे"नेति संशयजनकपक्षधर्म्मताज्ञानस्य विशेषणविधयालक्षणघटकत्वमभ्युपग-म्येत्यर्थः। यथाश्रुतलक्षणे व्याप्त्यादि ग्रहदशायां सद्धेतावतिव्याप्ति-वारणाय तादृशज्ञानं विशेषणविधयैव निवेशनीयं तादृशज्ञान-दशायामतिप्रसङ्गस्यास्त्येव तत्र तादृशज्ञानविरहदशायाञ्चागत्या साधारणस्य सव्यभिचारत्वं नोपगन्तव्यमेवेत्यतो यथोपवर्णितेति यथा व्याख्यातेत्यर्थकं अनुमितिविरोधिज्ञानाविषयस्यापि हेत्वा-भासविभाजकत्वे क्षतिविरहादेतज्ज्ञानेऽपीत्यादिनोक्तविभाजक-धर्म्मज्ञानस्यानुमित्यविरोधित्वकथनमकिञ्चित्करमित्यभिप्रायोपवर्ण-

लक्षणस्य न तत्राव्याप्तिरिति ध्येयम्। यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम्, अन्यथा ऽतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैत-

---

नेन निराकुरुते "यद्रूपज्ञान"मिति यद्रूपावच्छिन्नविषयकज्ञान-मित्यर्थः "तदेव" तद्रूपावच्छिन्नमेव एतेन निरुक्तपक्षधर्मताज्ञान-विषयतावच्छेदकधर्म्मवत्त्वस्यैव विभाजकतया साधारण्यादिरूप-तादृशधर्म्मविषयकज्ञानस्य चानुमितिविरोधितया तादृशनियमोप-गमेऽपि तथाविधधर्म्मस्य न विभाजकतानुपपत्तिरित्यपि परास्तम्। साधारण्यत्वादिनैव साधारण्यादिज्ञानस्य विरोधितया तादृशपक्ष-धर्म्मताज्ञानविषयतावच्छेदकत्वेन तस्य विभाजकत्वानुपपत्तेः एवञ्च एतदज्ञानेऽपीतिमूलस्य निरुक्तविभाजकतावच्छेदकावच्छिन्नाज्ञानेऽ-पीति "साधारण्यादिप्रत्येकस्यै"त्यस्य साधारण्यत्वादिरूपप्रत्येक-रूपावच्छिन्नस्येत्यर्थः इत्यवधेयम्। अन्यथा तादृशरूपावच्छिन्न-स्यापि विभाजकत्वेऽतिप्रसङ्गः अनुमितिकारणीभूतज्ञानविरोधि-धर्म्मवत्त्वादिना अन्यतरधर्म्मवत्त्वादिना वा सव्यभिचारविरुद्धादी-नामैक्यप्रसङ्गः मूले प्रतिबन्धादित्यस्य निरुक्तसामान्यधर्म्मवत्ता-ज्ञानस्याप्रतिबन्धकत्वादितिशेषः तस्यैव दोषत्वादित्यस्य प्रत्येक-धर्म्मस्यैव विरोधित्वादित्यर्थः तत्रैवायं हेतुरिति तु न सत् दोषत्वाच्चेति चकारासङ्गतेः तस्यैव दोषत्वादित्यस्य प्रथमं तस्यैव दोषतया उद्भावयितुमुचितत्वात् नत्वनुगतधर्म्मस्येत्यर्थः एवञ्च दोषविधया यादृशधर्म्म उद्भाव्यते स एव विभाजक उक्तानु-गतधर्म्मस्य चानुद्भावनीयतया न तथात्वमितिहृदयम्॥

दिति । वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि । पक्षवृत्तित्वे

---

ननु तदज्ञानदशायां अन्यज्ञानादनुमितिप्रतिबन्धकस्य तज्ज्ञानीयानुमित्यविरोधितावीजत्वं मणिकृताभिहितं न तद्घटते तथा सति सत्प्रतिपक्षादिज्ञानस्यानुमितिविरोधितया बाधादिज्ञानस्याप्यन्यथात्वापत्तेः अथ तद्वीजमाह "वस्तुतस्त्वि"ति "उपस्थापकत्वादौ"ति कोटिद्वयोपस्थापकज्ञानविषयत्वादौत्यर्थः आदिपदात् स्वयं निष्कर्षिततादृशज्ञानविषयतावच्छेदकरूपवत्त्वपरिग्रहः "विरोधिविषयकत्वाभावात्" ग्राह्यनिरूपितप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यत्वावच्छिन्नविषयत्वाभावात् इदञ्चवधेयं मूले प्रतिबन्धादित्यनन्तरं मानाभावेन निरुक्तधर्म्मज्ञानस्यानुमित्यप्रतिबन्धकत्वादिति शेषः एवञ्च प्रत्येकज्ञानस्यानुमितिप्रतिबन्धकत्वं नानुगतधर्म्मस्यानुमित्यप्रतिबन्धकत्वमन्यादृकतया मूलेऽभिहितं किन्तु तथात्वेन प्रमाणाभावे कथिते अनन्तरं ननु प्रत्येकं नानाधर्म्मज्ञानस्यानुमितिविरोधित्वकल्पनापेक्षया विरोधिविषयकस्यापि अनुगतधर्म्मज्ञानस्यैकस्य तथात्वं विशेषदर्शिनां साधारणादिहेत्वकानुमितिवारणाय कल्पयितुमुचितमित्याशङ्कावतारात् तत्परिजिहीर्षया प्रत्येकज्ञानस्यावश्यावश्यकल्पनीयप्रतिबन्धकताकत्वं दूषत्वादित्यन्तेनाभिहितमिति । एवमीदृशयुक्तेरुत्तरत्रापि निर्वक्ष्यमाणानुगतधर्म्मान्तरेऽपि अनुमितिविरोधिज्ञानाविषयत्वं बोध्यमिति शेषः । विरोधिपदस्य प्रतिबन्धकतार्थत्वेऽसङ्गतिः साधारण्यादेरतथात्वादता व्याचष्टे

एतदज्ञाने ज्ञानेऽपि वा आवश्यकप्रत्येकज्ञानस्य दोषत्वात् असाधकतानुमितौ व्यर्थविशेषणत्वाच्च। अतएव साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वं

---

सतीति। विरोधित्वं विरोधिज्ञानविषयत्वम् अव्यावृत्तिपदम् अत्यन्तायोगव्यवच्छेदार्थकम्. तेन संयोगसम्बन्धेन व्यभिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसङ्गः। साध्यवद्वृत्तिस्तु नासाधारण इति हृदयम्। अपक्षधर्मधूमादिवारणाय सत्यन्तं।

---

"विरोधित्व"मिति "विरोधिज्ञाने"ति प्रतिबन्धकीभूतज्ञानेत्यर्थः अनुमितिविरोधिसम्बन्धनिवेशेनैवोपपत्तावव्यावृत्तिपदमनर्थकमित्याशङ्कानिराचिकीर्षुस्तस्य व्यभिचारिणि साध्याभाववद्वृत्तित्वादिविरहदशायामव्याप्तिवारकतया सार्थकतासम्पादनाय व्याचष्टे "अव्यावृत्तीति" अत्यन्तायोगः प्रतियोगिवैयधिकरण्यावच्छिन्नोऽभावः। नाप्रसङ्ग इति रासभादौ महानसादिवृत्तिता दशायां वह्न्यभाववद्वृत्तित्वसत्त्वेऽपि प्रतियोगिवैयधिकरण्यावच्छिन्नतदभावस्य तत्रासत्त्वेन तद्व्यवच्छेदकस्य तदानीमपि सत्त्वादितिभावः। नन्वेवं शब्दोऽनित्यः शब्दत्वादित्यसाधारण्योत्तीर्णतादशायामतिप्रसङ्ग इत्यत आह "साध्यवद्वृत्तिस्त्विति" "नासाधारण"इति निश्चयागर्भितस्य साध्यतदभाववद्व्यावृत्तत्वस्यैवासाधारण्यपदार्थत्वादितिशेषः तथाचोक्तस्थले तत्र कदाचिदप्यसाधारण्यस्य सत्त्वान्नातिप्रसङ्ग इतिभावः। बाधादिवारणाय विवक्षणीयस्य पक्षे साध्यवैशिष्ट्यग्रहविरोधित्वस्य

साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं वेति परास्तम्, व्यर्थविशेषणत्वात् प्रथमं हेत्वाभासत्वाज्ञानाच्च। गगनमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसङ्कीर्णासाधारणाव्याप्तिरिति कश्चित्। नापि सपक्षविपक्षगतसर्व्वसपक्षविपक्षव्यावृत्तान्यतरत्वं, व्यर्थ-

---

पक्षः सन्दिग्धसाध्यो धर्म्मी। विशिष्टहेतौ तद्वृत्तित्वग्रहाविरोधित्वञ्च तदर्थः। तथाच पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण

---

लाभाय पक्षपदं व्याचष्टे "पक्ष" इति सन्दिग्धसाध्यः सन्दिग्धसाध्यविशिष्टः धर्म्मी पक्षतावच्छेदकावच्छिन्नः विशिष्टहेतौ हेतुतावच्छेदकावच्छिन्नहेतौ "तद्वृत्तित्वे"ति तादृशसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षवृत्तित्वेति तादृशसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षवृत्तित्वेत्यर्थः। पक्षवृत्तित्वार्थकं वैशिष्ट्यञ्च वैज्ञानिकं तेन बाधादिसङ्करस्थले साध्यादिविशिष्टपक्षाप्रसिद्धावपि न क्षतिः बाधादिज्ञानस्य साध्यविशिष्टपक्षतावच्छेदकावच्छिन्नविषयकज्ञानविरोधित्वान्न बाधादिकमादाय ह्रदो वह्निमान् धूमादित्यादावतिव्याप्तिरितिभावः। अत्र साध्यवद्वृत्तित्वरूपासाधारण्यस्यासंग्रहः तज्ज्ञानदशायां हेतौ साध्यविशिष्टपक्षवृत्तित्वग्रहानुदयात् एवञ्च साध्यांशे संशयत्वविशेषणमफलं इत्यतस्तत्परित्यज्य निष्कृष्टार्थमाह "तथाचे"ति "पक्षतावच्छेदके"ति पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारता या च

विशेषणत्वात् अनुपसंहार्य्यव्याप्तेश्च। किञ्च पक्षाति-रिक्तसाध्यवतः सपक्षत्वे प्रमेयत्वेनाभेदसाधनेऽनुपसं-हार्य्येऽव्याप्तिः पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः साध्यवतः सपक्षत्वे विवक्षितेऽप्रसिद्धिः, वृत्तिमतो धर्म्मस्य साध्य-वद्विपक्षान्यतरवृत्तित्वनियमात्।

---

तादृशी हेतुतावच्छेदकावच्छिन्नहेतुप्रकारता तन्निरूपकलौकिक-सन्निकर्षाद्यजन्यज्ञानाविरोधित्वस्य लाभादित्यर्थः। तादृशज्ञाना-विरोधित्वञ्च न तादृशज्ञानसामान्यनिरूपितप्रतिबन्धकतानति-रिक्तवृत्तिविषयित्वानिरूपकत्वं हेतुमन्निष्ठसाध्याभावादिरूपव्यभि-चारस्यापि पक्षनिष्ठसाध्याभावत्वादिना बुद्धेस्तादृशज्ञानं प्रति प्रतिबन्धकत्वात्तादृशविषयितानिरूपकत्वेनासम्भवप्रसङ्गात्। किञ्च तादृशविषयतानिरूपकतानवच्छेदकधर्म्मवत्त्वं तदनवच्छेदकत्वञ्च तदवच्छेदकतापर्य्याप्त्यनधिकरणत्वं तेन हेतुमन्निष्ठसाध्याभावत्वा-देस्तादृशप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदक-पक्षनिष्ठसाध्याभावत्वादितोऽनतिरिक्तत्वेऽपि न क्षतिः। बाधादि-निष्ठानामनुमितिविरोधितानवच्छेदकधर्म्माणां तादृशविषयिता निरूपकतानवच्छेदकत्वेऽपि तादृशविषयितानिरूपकतानवच्छेद-कीभूतानुमितिविरोधितावच्छेदकरूपावच्छिन्नत्वस्य समुदायार्थ-त्वान्नातिप्रसङ्गः तादृशयत्किञ्चिज्ज्ञानं यादृशरूपावच्छिन्नविषयक-निश्चयसामान्यप्रतिबध्यं तादृशो योऽनुमितिविरोधितावच्छेदको धर्म्मस्तदवच्छिन्नत्वं वा समुदायार्थः। वस्तुतस्तु निरुक्ततादृश-

नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम्, अनुपसंहार्य्यव्याप्तिः धूमादावतिव्याप्तेश्च तस्य पक्ष एव साध्यवति वृत्तेः।

---

साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्व्वा यज्ज्ञानं तदविरोधित्वस्य लाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां

---

ज्ञानाविरोधित्वं अनुमितिविरोधिनि तादृशज्ञानविरोधितानवच्छेदकत्वं वा अनुमितिविरोधितावच्छेदके न विशेषणीयं परन्तु अनुमितिविरोधिताघटकानुमितिनिष्ठप्रतिबध्यतायामेव तादृशज्ञानत्वन्यूनवृत्तित्वं निवेशनीयं लाघवात् बाधादिज्ञाननिरूपितप्रतिबध्यतानाञ्च तादृशसकलज्ञानसाधारणतया न तादृशज्ञानत्वन्यूनवृत्तित्वमतोनातिप्रसङ्गः व्यभिचारज्ञानप्रतिबध्यत्वञ्च तन्न्यूनवृत्त्येव व्याप्यविषयकतादृशज्ञानावृत्तित्वात् अग्रेऽपि सर्व्वत्र तादृशदिशा निष्कर्षणीयमिति* अत्र च द्रव्यत्वाभाववद्वृत्ति मेयत्वं द्रव्यं मेयत्वादित्यादौ व्यभिचारो ऽसिद्धिमध्य एव निवेशित इति हृदयम्। पक्षसाध्यसाधनानां अप्रसिद्ध्या समन्वयः

---

* ख०, अत्र च यत्र प्रकृतपक्षे व्यभिचाराभावो निर्विवादस्तत्र व्यभिचारोऽसिद्धिमध्य एव निवेशित इति हृदयम्।

निरासोऽसिद्धिसङ्कीर्णसंग्रहस्य। विरोधोऽपि फलतः प्रतिरोध एव।

---

"निरास" इति तेषां ज्ञानस्य यथोक्तज्ञानप्रतिबन्धकत्वादिति-भावः। "असिद्धिसङ्कीर्ण" हृदादौ धूमादिसाधने वह्न्यादिहेतुस्तत्संग्रहः तत्र यथाश्रुतपक्षवृत्तित्वासत्त्वेऽपि यथोक्तज्ञानाविरोधि-साध्याभाववद्वृत्तित्वाद्युपादाय लक्षणसमन्वयसम्भवादितिभावः ननु विरोधोऽपि यथोक्तज्ञानाविरोधी अनुमितिविरोधी चेत्यति-प्रसङ्गः। न च विरुद्धो हेतुः साध्यवद्व्यावृत्ततया असाधारण एवेति न तत्र सव्यभिचारलक्षणातिव्याप्तिप्रसक्तिरितिवाच्यं यथोक्त-ज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य विरोधसाधारण्ये तस्य व्यभिचारपदप्रवृत्तिनिमित्तत्वासम्भवात् तदवच्छिन्नवतः सव्यभि-चारपदार्थत्वे तत्पदस्य पारिभाषिकत्वापत्तेः सव्यभिचारलक्षणाति-व्याप्तेश्चाशक्यपरिहारत्वादत आह "विरोधोऽपी"ति "फलतः" तदभावव्याप्यवत्ताज्ञानविधया अनुमितिप्रतिबन्धरूपफलप्रयोजक-ज्ञानविषयत्वेन "प्रतिरोधः" प्रतिरोधतुल्य एव तथाच पक्षे साध्य-वत्ताज्ञानविरोधित्वान्न तत्रातिप्रसङ्ग इतिशेषः पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वं विरोधः तादृशाभावप्रति-योगित्वञ्च साध्याभावस्य व्यतिरेकव्याप्तिरिति तज्ज्ञानं तदभाव-व्याप्यवत्ताज्ञानविधया पक्षे साध्यवत्ताज्ञानं विरुणद्धीतिहृदयम्। साध्यासामानाधिकरण्यस्यैव चिन्तामणिकारमते विरोधतया तस्य पक्षे साध्यवत्ताज्ञानाविरोधितयाऽतिव्याप्तिर्दुर्व्वारैव इत्यतस्तन्मता-

नापि पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसम्बन्धशून्यत्वं व्यर्थविशेषणत्वात्। एतेनानुगतं सर्व्वमेव लक्षणं प्रत्युक्तं, प्रत्येकमेव दूषणत्वात्। उद्भावने वादिनिवृत्तेश्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे सव्यभिचारपूर्व्वपक्षः॥

---

तदन्यत्वेन वा विरोधि विशेषणीयम्। वक्ष्यते च सिद्धान्ते "विरुद्धान्ये"ति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकम्। सम्बन्धपद-

---

भिप्रायेण तद्वारणाय प्रकारान्तरमनुसरति "तदन्यत्वेन"वेति विरोधान्यत्वेन वेत्यर्थः "विरोधि" अनुमितिविरोधि, अथैतन्मते किमसाधारण्यं न तावत् पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वं तज्ज्ञानस्य पक्षे साध्यवत्ताज्ञानं प्रति तदभावव्याप्यवत्ताज्ञानमुद्रया विरोधित्वेन सत्यन्तार्थविरहात् नापि निश्चितसाध्यवद्व्यावृत्तत्वं तज्ज्ञानस्यानुमितौ तत्कारणीभूतज्ञाने वा प्रतिबन्धकताविरहेण हेत्वाभाससामान्यलक्षणस्यैतल्लक्षणस्य च तत्साधारण्यविरहात् अनुमितिकारणीभूतसाध्यसामानाधिकरण्यज्ञानं प्रति साध्यवद्व्यक्तिविशेषावृत्तित्वज्ञानस्य प्रतिबन्धकत्वात् यथाकथञ्चित् प्रतिबन्धकत्वे साध्यसामानाधिकरण्यग्रहविरोधित्वरूपविरोधान्यत्वस्य

तत्त्वासत्त्वेन प्रकृतलक्षणस्य तत्साधारण्यासम्भवात् नापि पक्षवृत्तित्वा-विशेषितं साध्यव्यापकीभूताभावप्रतियोगित्वं तज्ज्ञानस्याप्यनुमितौ तज्जनकज्ञाने चाविरोधित्वात् यदि च पक्षधर्म्मिकप्रकृतहेतुमत्ता-ज्ञानसहकृतं प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वज्ञान-मनुमितिं प्रतिबध्नाति स्थाणुत्वाभावव्याप्यकरादि, करादिमांश्चायं इत्यादिज्ञानद्वयदशायामपि अयं स्थाणुरित्यादिज्ञानानुदयात् धर्म्मिविशेष्यकतद्वत्ताज्ञानविशिष्टतद्धर्म्मिकग्राह्याभावव्याप्यत्वनिश्चय-त्वेनैव तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमित्युच्यते तदा तादृशधर्म्मस्य पक्षे साध्यवत्ताज्ञानविरोधित्वात् सत्यन्तार्थविरह इति । अत्र केचित् पक्षवृत्तित्वविशेषितं साध्यव्यापकीभूताभाव-प्रतियोगित्वमेवासाधारण्यं सत्यन्तदले च विरोधिताघटकप्रति-बन्धकतायां तादृशासाधारण्यविषयकत्वानवच्छिन्नत्वविशेषणं प्रक्षिप्य तत्साधारण्यं प्रकृतलक्षणस्योपपादनीयमित्याहुः परे तु हेतुनिष्ठं साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यं तद्वि-षयकत्वस्य पक्षधर्म्मिकहेतुमत्ताज्ञानविरहकालीनानुमित्यप्रति-बन्धकज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि पक्षधर्म्मिकहेतुमत्तानिश्चयविशिष्ट यादृश विशिष्टविषयकनिश्चयत्व-मनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य सामान्यलक्षणे अत्र च विवक्षणीयतया सामान्यलक्षणस्य प्रकृतलक्षणविशेष्यदलस्य च तत्साधारण्यनिर्व्वाहः । पक्षतावच्छेदकविशिष्टपक्षे साध्यताव-च्छेदकविशिष्टसाध्यवत्ताज्ञानाविरोधित्वस्य च तादृश यत्किञ्चिज्-ज्ञानं यादृशधर्म्मावच्छिन्नविषयकनिश्चयसामान्यप्रतिबध्यं तादृशधर्म्म-

वत्त्वरूपस्य शरीरे निश्चयांशे पचधर्म्मिकहेतुमत्तानिश्चय-विशिष्टानिवेशात् तादृशनिश्चयविरहकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वविषयकनिश्चयस्यापि तद्विषयकनिश्चयसामान्यान्तर्गतत्वेन पचे साध्यवत्ताज्ञानस्य च तदप्रतिबध्यतया तद्दशस्याप्येतत् साधारण्योपपत्तिरित्याहुः। वस्तुतस्तु यादृशविशिष्टविषयकनिश्चयत्वं अनुमितिप्रतिबन्धकताशून्यपचधर्म्मिकहेतुमत्तानिश्चयकालीन*-ज्ञानावृत्ति तद्वत्त्वमेव विवचणीयं अथवा स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वनिवेशे यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पचधर्म्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्तद्वत्त्वमेव†

* हेतुमत्ताविषयकनिश्चयावृत्तित्वनिवेशेनैव सामञ्जस्ये कृतं कालीनत्वनिवेशेनेति, सत्यं; पर्व्वतो द्रव्यं वह्न्यभावव्याप्यादित्यत्र दोषवारणाय कालीनत्वनिवेश इति तन्न तत्रापि विशिष्टान्तराघटितत्वं नास्तीति पूर्व्वपचं सुदृढं वस्तुतस्तु यथा श्रुताभिप्रायेणेदं व्यावृत्तिप्रदर्शनम् ॥

† अत्र तादृशप्रतिबन्धकताशून्यपचधर्म्मिकहेतुमत्ताविषयकनिश्चयावृत्तित्वमिति प्रथमकल्पे, द्वितीये च यादृशविशिष्टविषयकनिश्चयत्वव्यापकः अनुमितिप्रतिबन्धकत्वपचधर्म्मताज्ञानविषयकत्वोभयाभाव इत्येवोच्यतां किं समवहितकालीनत्वप्रवेशेन इति चेन्न पर्व्वतो द्रव्यत्ववान् वह्न्यभावव्याप्यादित्यादौ वह्निमत्पर्व्वतादावतिप्रसङ्गात् वह्निमान् पर्व्वतो वह्न्यभावव्याप्यवांश्चेत्यादिसमूहालम्बनादिज्ञानस्याहार्य्यतया अनाहार्य्यं यत् वह्न्यभावव्याप्यवान् पर्व्वत इत्याकारकं पचधर्म्मिकहेतुमत्ताविषयकं ज्ञानं तत्र वह्निमत्पर्व्वतविषयताया अवृत्तेः कालीनत्वनिवेशे च वह्न्यभावव्याप्यवत्ताबुद्धौ वह्निमत्ताबुद्धेरप्रतिबन्धकतया वह्न्यभावव्याप्यवत्तानिश्चयकालीनतत्पूर्व्वोत्पन्नवह्निमत्पर्व्वतनिश्चये वह्निमत्पर्व्वतत्वावच्छिन्नविषय-

तायाः वृत्तित्वेन वह्न्यभावव्याप्यप्रकारकनिश्चयकालीनत्वानुमित्यप्रतिबन्धकत्वोभयोः सत्त्वेन च कल्पद्वये नातिप्रसङ्ग इति भावः। अथात्र ह्रदत्वादिसामानाधिकरण्येन वह्निसाध्यकजलादिहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्येऽव्याप्तिः सामानाधिकरण्येन हेतुमत्तानिश्चयकालीन तादृशासाधारण्याविषयकनिश्चये तादृशानुमिति प्रतिबन्धकत्वस्यासत्त्वात् न च सामानाधिकरण्येन साध्यकस्थलेऽप्यवच्छेदावच्छेदेन हेतुमत्ताज्ञानकालीनत्वं निवेश्य तादृशासाधारण्येऽव्याप्तिर्व्वारणीया इति वाच्यं सामानाधिकरण्येन हेतुतास्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्त्यापत्तेरवच्छेदावच्छेदेन हेतुमत्तानिश्चयकालीनस्य तादृशहेत्वभावविषयकज्ञानस्याहार्य्यतया तत्कालीनज्ञानस्य धर्त्तुमशक्यतया तादृशज्ञानाकालीनज्ञानस्यैव यद्रूपपदेन धर्त्तव्यतया तत्र तादृशहेतुमत्तानिश्चयकालीनत्वस्यासत्त्वादिति चेन्न असाधारण्याविषयकज्ञाननिष्ठपक्षधर्म्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्य विवक्षितत्वात्। न चासाधारण्याविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्यैव सम्यक्त्वमिति वाच्यं धर्म्मिभेदेन वैयर्थ्याभावात्। न च घटवद्वह्निव्यापकीभूताभावप्रतियोगिजलं वह्निमज्जलादित्यादौ सामानाधिकरण्येन वह्निसाध्यकस्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिः तादृशज्ञानस्यासाधारण्यविषयकत्वेन यथोक्तोभयाभावस्य सत्त्वादिति वाच्यं असाधारण्यविषयानन्तर्गतविषयताशालिज्ञाननिष्ठतादृशपक्षधर्म्मिकहेतुमत्तानिश्चयकालीनत्वघटितोभयाभावस्य विवक्षितत्वादिति।

अत्रेदं चिन्तनीयं ह्रदो वह्निमान् जलादित्यादावसाधारण्येऽव्याप्तिर्वह्निव्यापकीभूताभावप्रतियोगि जलं वह्निमदित्याकारकस्य तादृशजलांशे वह्नेर्भ्रमात्मकज्ञानस्य असाधारण्यविषयतानन्तर्गतविषयतावत्त्वेन तादृशोभयाभावस्य तत्रासत्त्वादिति।

अत्र केचित् सर्व्वत्रैव पक्षतावच्छेदकावच्छेदेन हेतुमत्तानिश्चयकालीनत्वघटितोभयाभाववत्त्वमेव निवेश्यं सामानाधिकरण्येन हेतुतास्थले

सामानाधिकरण्येन हेत्वभाववत्पक्षे ऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वं निवेशनीयम्। न चैवं वह्निव्यापकीभूताभावप्रतियोगि जलं वह्निमज्जलादित्यादौ साधारण्येन हेतुतास्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिर्वह्निव्यापकीभूताभावप्रतियोगि जलं जलाभाववदित्यादिज्ञानीयतादृशहेत्वभाववत्पक्षविषयताया अपि असाधारण्यविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वादिति वाच्यं तदन्तर्गतप्रतियोगित्वप्रकारिता निरूपितविशेष्यताया एव प्रतिबन्धकतावच्छेदकत्वेन तादृशजलाभावत्वावच्छिन्नप्रकारितानिरूपितविशेष्यितायास्ततोभिन्नत्वेन तद्दोषानवकाशात्। न चैवं अनुमितिप्रतिबन्धकत्वघटितोभयाभावदलवैयर्थ्यमिति वाच्यं वृक्षः संयोगी एतत्त्वादित्यादौ संयोगाभाववद्वृक्षेऽतिव्याप्तिवारणाय तत्सार्थक्यात्। यद्वा स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकताव्यापकताकयद्रूपावच्छिन्न विषयिता भिन्ना या अवच्छेदावच्छेदेन हेतुमत्त्वग्रहप्रतिबन्धकतावच्छेदकविषयिता तद्भिन्नत्वं यद्रूपावच्छिन्नविषयित्वे निवेशनीयमतो न कोऽपि दोषः इत्याहुः।

वस्तुतस्तु असाधारण्याविषयकज्ञाननिष्ठपक्षधर्म्मिक हेतुमत्तानिश्चयकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्य निवेशनेन दोषानवकाशः। एतत्कल्पे पक्षधर्म्मिकहेतुमत्तानिश्चयत्वादिकं प्रयोजनविरहेण न निविश्यते इति कृदो वह्निमान् गगनवद्धृदकालीनगगनव्याप्यवज्जलवद्वृत्तिजलादित्यादौ जलावच्छेदेन गगनाभावादौ अनाहार्य्यपक्षधर्मिकहेतुमत्ता निश्चयकालीनस्य तद्विषयकनिश्चयस्याप्रसिद्धावपि नातिव्याप्तिः। अत एव वह्निव्यापकीभूताभावप्रतियोगिजलस्य यत्र पक्षत्वं तादृशजलत्वसामानाधिकरण्येन वह्नेः साध्यत्वं ज्ञानस्य हेतुत्वं तत्र वह्निव्यापकीभूताभावप्रतियोगिजलात्मके ऽव्यापित्वात्तादृशजलत्वावच्छिन्नधर्म्मिकवह्निप्रकारकबुद्धिं प्रति लाघवात् तादृशजलत्वावच्छिन्नधर्म्मिकजलप्रकारकनिश्चयत्वेन प्रतिबन्धकत्वस्य स्वीकरणीयतया तादृशासाधारण्यविषयकनिश्चये प्रतिबन्धकत्वस्यासत्त्वेनोभया-

विशेषणीयं* अन्यथा स्वरूपासिद्धिवारकस्य हेतुमत्त्वग्रहाविरोधित्वदलस्य वैयर्थ्यापत्तेः पक्षधर्म्मिकहेतुमत्तानिश्चयकालीनाहार्य्यतद्विषयकनिश्चयस्याप्रसिद्ध्या यादृशविशिष्टविषयकपदेन तस्योपादानासम्भवात् एवं सामान्यलक्षणस्याप्यव्याप्तिः यथा विवक्षिते तु तद्विषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकताशून्यपक्षधर्म्मिकहेतुमत्तानिश्चयकालीनज्ञानावृत्तित्वेन तत्रातिव्याप्तिवारकतया† तत्सार्थक्यं सामान्यलक्षणस्य च सत्त्वं निर्व्वहति। एतादृश विशेषणप्रक्षेपे मूलकृतः सम्मतिमाह वक्ष्यते चेति ननु हेतुनिष्ठसाध्यसामानाधिकरण्यात्यन्ताभाव-तद्भेद-साध्यनिष्ठहेतुसामानाधिकरण्याभावादि-साध्यासामानाधिकरण्यविशिष्टसाधनादिरूपनानाविधविरोधानामेकस्य भेदनिवेशेऽन्यत्राव्याप्तिर्दुर्व्वारैव एवं साध्य-

भावस्यासत्त्वादिति यदास्तं तादृशनिश्चयस्यासाधारण्याविषयकत्वेनासाधारण्याविषयकज्ञाननिष्ठपक्षधर्म्मिकपक्षधर्म्मताज्ञानकालीनत्वघटितोभयाभावस्य सत्वेनाव्याप्तेरभावात् जलवत्तादृशजले ऽतिव्याप्तिस्तु यथाकथञ्चित्तत्प्रतिबन्धकताभेदादिकं निवेश्य वारणीयेत्यलमधिकेन ॥

* (वस्तुतस्तु प्रतिबन्धकतानतिरिक्तावृत्तित्वं तादृशप्रतिबन्धकताशून्यं यत्पक्षधर्म्मिकहेतुमत्तानिश्चयसहितं ज्ञानं तदवृत्तित्वमेव विवक्षणीयम् ) अत्रायं वेष्टनीनिबद्धः पाठः क्वचित् पुस्तके दृश्यते नासौ सन्दर्भ शुद्धः ।

† ख, तत्सार्थक्यात् सामान्यलक्षणस्यापि सम्भवात् अत्र वदन्तीत्यादिनिष्कृष्टकल्पे च पक्षवृत्तित्वासहितोक्तरूपस्य स्वविषयकनिश्चयाव्यवहितोत्तरानुमिति सामान्ये उभयाभावसत्त्वात् सामान्यलक्षणाक्रान्तत्वं विशेषलक्षणाक्रान्तत्वञ्च निर्व्वहति हेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानानन्तरं हेतुमान् पक्षः साध्यवान् इत्यनाहार्य्यज्ञानानुदयात् ॥

सामानाधिकरण्यविशिष्टसाधनादिरूपविरोधभेदनिवेशे साध्याभाववद्वृत्तित्वविशिष्टसाधनादिरूपस्य विरुद्धस्थलीयव्यभिचारस्यासंग्रहः। गोत्वतद्वृत्तित्वविशिष्टाश्वत्वादितो गोत्वाभाववद्वृत्तित्वादिविशिष्टाश्वत्वादेरनतिरिक्तत्वादित्यत आह "हेत्विति" हेतुतावच्छेदकावच्छिन्नधर्म्मिक-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यप्रकारकज्ञानाविरोध्यर्थकमित्यर्थः।* तेन विरोधग्रहदशायामपि रूपान्तरेण साध्यहेतुविषयकसामानाधिकरण्यग्रहोत्पत्तावपि न क्षतिः न वा अवृत्तिहेतुकस्थले तदुभयसामानाधिकरण्याप्रसिद्ध्या तत्स्थलीयासाधारण्यसंग्रहः सामानाधिकरण्येऽपि साध्यतावच्छेदकावच्छिन्नीयत्वं वैज्ञानिकमेव न तु वास्तवं तेन नावृत्तिसाध्यकसाधारण्यासंग्रहः अविरुद्धहेतुकस्थलीयव्यभिचारलक्षणे च एतद्विशेषणमनुपादेयमेव तेन तत्र हेतुसामानाधिकरण्यग्रहविरोध्यप्रसिद्धावपि न क्षतिः वस्तुतस्तु तादृशसामानाधिकरण्यग्रहत्वव्याप्यवृत्तित्वस्यैव अनुमितिविरोधिताघटकानुमितिनिष्ठप्रतिबध्यतायां निवेशनीयतया धूमवान् वह्नेरित्यादौ सामानाधिकरण्यग्रहविरोधिनोऽप्रसिद्धावपि न क्षतिः। केचित्तु सत्यन्तस्य विशिष्टहेतौ विशिष्टपक्षवृत्तित्वग्रहाविरोधित्वमेवार्थं वर्णयन्तो बाधादिवारणाय पन्थानमन्यमेवाश्रयन्ते तन्मतमाक्षिपति "सम्बन्धपदे"ति "प्रकृतहेतुसम्बन्धितया विरोधित्वे" इति प्र तद्धेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालि-

---

* ख, हेतुतावच्छेदकावच्छिन्नधर्म्मिकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यप्रकारकज्ञानस्याविरोध्यर्थकमित्यर्थः।

वत्वेन प्रकृतहेतुसम्बन्धितया विरोधित्वे तात्पर्य्योपवर्णनेन प्रायशो बाधादिवारणेऽपि घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति वस्तुतस्त्वनुमितिपदं तत्कारणज्ञानपरम्। आश्रया-

---

निश्चयत्वं अनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नत्वं इत्यर्थः यत्किञ्चिद्रूपावच्छिन्नहेतुविशेष्यतानिवेशे द्रव्यं वह्निमत् धूमादित्यादौ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावुद्देश्यायां द्रव्यत्वाद्यवच्छिन्नधूमादिविशेष्यता निरूपितसाध्याभावादिप्रकारताशालिनिश्चयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात साध्याभावादिवारणामम्भव इत्यतः "प्रकृते"ति प्रकृतहेतुतावच्छेदकावच्छिन्नेत्यर्थकं अथैवं हेत्वघटितसाध्याभाववद्वृत्तित्वादिकमेव व्यभिचारः स्यान्न चेष्टापत्तिः तस्य सामान्यलक्षणानाक्रान्तत्वात् हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठस्य विरोधिविशेषणत्वोपगमेनैव तादृशातिप्रसङ्गवारणेऽपि साध्याभाववद्वृत्तित्वविशिष्टसाधनादेः साध्याभावनिष्ठसाधनसामानाधिकरण्यादेश्चासंग्रहः। न च हेतुतावच्छेदकावच्छिन्नघटितत्वे सति विरोधित्वमेव प्रकृतहेतुसम्बन्धितया विरोधित्वं तच्च विशेष्यविशेषणभावभेदेन विभिन्नसकलव्यभिचारसाधारणमेवेति वाच्यं। तथा सति ह्रदो वह्निमान् अभावादित्यादौ वह्न्यभाववद्वृत्त्यादिरूपबाधादौ गगनवान् अभावादित्यादौ अवृत्तित्ववत् गगनादिरूपव्याप्यत्वासिद्धौ चातिव्याप्त्यापत्तेः मैवं व्यभिचारलक्षणस्य नैतादृशरीत्या परिष्कारः अपि तु सव्यभिचारलक्षणस्यैवेति न साध्याभावादिनिष्ठसाधनसामानाधिकरण्याद्यसंग्रहे, हेत्वघटित साध्याभाववद्वृत्तित्वादेः संग्रहे क्षतिः। अथवा हेतुनिष्ठत्वविशेषित-

तादृशविरोध्येव व्यभिचारपदार्थः अन्यविधोपदर्शितव्यभिचारास्तु एतन्मते व्याप्यत्वासिद्धावेवान्तर्भाव्यन्ते तावता क्षतिविरहात् प्राय इत्यस्य प्रयोजनं स्वयमेव प्रकाशयिष्यते बाधादीत्यादिना सत्प्रति-पक्षादिपरिग्रहः तत्साध्यकतद्धेतुकानुमितिसामान्यं प्रति हेतुसम्ब-न्धितया विरोधित्वविवक्षणे तादृशबाधादिवारणसम्भवादसाध्यत्व-मुपेक्ष्य प्रयत्नसाध्यत्वकथनं । न चैवं हेतु सम्बन्धितयेत्यस्य वैयर्थ्य-मितिवाच्यं तदनुपादाने साध्यनिष्ठावृत्तित्वरूपव्याप्यत्वसिद्धावति-प्रसङ्गापातात् तस्य तत्साध्यकानुमितिमात्र एव विरोधित्वात् । न च तदुपादानेऽपि हेतुनिष्ठावृत्तित्वेऽतिप्रसङ्गो दुर्व्वार इतिवाच्यं सत्यन्तदलेनैव तद्वारणात् अतएव हेतुनिष्ठपक्षावृत्तित्वादेस्तादृशानु-मिति* सामान्याविरोधित्वादेव तद्वारणे सत्यन्तवैयर्थ्यमित्यपि परास्तं काञ्चनमयवह्निमान् वह्नेरित्यादौ साध्याप्रसिद्धिवारणन्तु विशिष्ट-साध्यग्रहाविरोधित्वविशेषणप्रक्षेपेणैव सम्भवतीतिहृदयम् । तद्वारणं बाधादिवारणं अत्र च व्यभिचारज्ञानस्य प्रकृतपक्षे प्रकृतसाध्यानुमित्य-विरोधितया अनुमिति पदस्य प्रकृतपक्षे प्रकृतसाध्यव्याप्यप्रकृतहेतु वैशिष्ट्यावगाह्यनुमितिपरत्वमावश्यकं तच्च निष्प्रयोजनकं साध्यवैशि-ष्ट्यावगाहित्वं निवेश्य तन्निबन्धनबाधाद्यतिव्याप्तिवारकविशेषणा-न्तरप्रक्षेपः प्रक्षालनाद्धीत्यादिन्यायेनायुक्त इत्यतो ज्ञाने साध्यवैशि-ष्ट्यावगाहित्वं विरोधिनि बाधादिवारकविशेषणञ्च परित्यजति "वस्तुतस्त्विति" आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धिसाधनाप्र-सिद्धिपरिग्रहः । यथाश्रुते आश्रयासिद्ध्यादिवारणासम्भवाद-

* ख, तादृशानुमितिमात्रेऽविरुद्धत्वादेव ।

सिद्ध्यादिवारणाय सत्यन्तम्। तादृशपक्षक-तादृशहेतुकग्रहाविरो-धित्वर्थकम्। अन्यथा च वाचो भङ्ग्या व्याप्तिग्रहविरोधित्वमेवाभि-धित्सितं तेन वह्निमान् ह्रदत्वादित्यादौ हेतोः साध्यवद्वृत्ति-त्वादेर्नासंग्रहः विवेचयिष्यते चेदमुपरिष्टात्। सपक्षेति सम्पाता-

---

सिद्धिसङ्कीर्णव्यभिचारासंग्रहाच्च सत्यन्तार्थं व्याचष्टे तादृशेति प्रथमं तादृशपदं पक्षतावच्छेदकविशिष्टेत्यर्थकं उदीच्यं तद्धेतुतावच्छे-दकविशिष्टार्थकं, ननु वह्निमान् वह्निमान् ह्रदत्वादित्यादौ हेतु-निष्ठसाध्यासामानाधिकरण्यादिरूपासाधारण्यासंग्रहः तज्ज्ञानस्य साध्यात्मकपक्षतावच्छेदकविशिष्टे हेतुमत्त्वग्रहविरोधित्वादत आह-"अन्यथेति" अनुमितिकारणीभूतं व्याप्तेः पक्षधर्मतायाश्च ज्ञानं तथाच पक्षधर्मताज्ञानाविरोधित्वकथनेन पारिशेष्याद्व्याप्तिज्ञानविरोधित्व-मेव लभ्यते इति भावः। नन्वेतत्साध्यसाधनयोरप्रसिद्धावतिव्यापकं अन्योऽन्यात्यन्ताभावगर्भव्याप्त्योरेकतरोपादाने ऽन्यतरव्यभिचारा-संग्राहकं साध्याव्यभिचारित्वविशिष्टसाध्यसामानाधिकरण्याभावरूप-व्याप्यत्वासिद्धावतिव्यापकञ्चेत्यत आह "विवेचयिष्यत" इति विशिष्ट-साध्यसाधनग्रहाविरोधित्वं निवेश्य साध्याप्रसिद्ध्यादिकं वारयिष्यते इदं द्रव्यं द्रव्यत्वाव्यभिचारिसत्त्वादित्यादौ विशिष्टसाधनग्रहविरोधी व्यभिचारोऽसिद्धावेवान्तर्भावनीयः समूहालम्बनात्मकं नानाविध-व्याप्तिज्ञानमादाय अत्यन्तान्योऽन्याभावगर्भद्विविधव्यभिचाराः-संग्रहीष्यन्ते व्याप्त्यभावस्य व्यभिचार एवान्तर्भावयिष्यते तस्य बहिर्भावनीयत्वे विसकलितयोरेवाव्यभिचारसामानाधिकरण्ययो-

ज्ञानमुपादेयमिति न कस्यचिद्दोषस्यावकाश इतिभावः। ननु सपक्षवृत्तित्वज्ञानस्यानुमित्यविरोधितया सपक्षविपक्षवृत्तित्वस्यानुमितिविरोधोक्तिर्न सङ्गच्छते न च विपक्षवृत्तित्वज्ञानस्यानुमितिप्रतिबन्धकतया तद्घटितविशिष्टस्यानुमितिविरोधित्वमक्षतमेवेति वाच्यं तथा सत्यपि विपक्षवृत्तित्वमात्रस्यापि तथात्वात्तदादाय एव लक्षणसङ्गमनसम्भवे विशिष्टमादाय लक्षणगमनस्य सन्दर्भविरुद्धत्वात् विपक्षवृत्तित्वमात्रस्यातथात्वे तदादाय विरुद्धेऽतिव्याप्तेरप्रसिद्धेः विरुद्धोऽपीत्यग्रिमग्रन्थासङ्गतिश्च इत्यत आह "सपक्षेती"ति तथाच विपक्षवृत्तित्वमात्रं विवक्षितमितिभावः। "अतएव" सपक्षवृत्तित्वस्याविवक्षितत्वादेव मूले एतद्ज्ञान इति दृष्टान्तविधयोक्तं तथाच तादृशानुगतधर्म्माज्ञानदशायामिव तज्ज्ञानदशायामपि अवश्यकल्प्यप्रतिबन्धकताकप्रत्येकज्ञानस्यैव दोषत्वात् अनुमित्यनुत्पादप्रयोजकत्वादित्यर्थः तथाचानुगतधर्म्मज्ञानदशायां प्रत्येकज्ञानस्यासत्वे अनुमितिरिष्टैव तत्सत्त्वे तत एवानुमित्यनुत्पाद इति तज्ज्ञानप्रतिबन्धकताया अप्रामाणिकत्वान्न तस्य विभाजकत्वमितिभावः। व्यर्थविशेषणत्वादितिमूले विशेषणपदस्यानुमितिविरोधित्वरूपविशेषणपरत्वं न सम्भवति तदनुपादाने सद्धेतौ व्यभिचारादतो व्याचष्टे "विशेषण"मिति स्वरूपासिद्धादिहेतोरप्यसाधकतया तत्र व्यभिचाराप्रसक्तेस्तद्वारकं विशेषणं व्यर्थमेवेतिभावः। सद्धेतोः साध्यव्याप्यतया तत्रातिव्याप्त्यप्रसक्तेर्हेत्वाभासपदं व्यर्थमित्याशङ्कां निराचिकीर्षुर्दोषलक्षणेऽसिद्धिविशेषात्मकावृत्तित्वातिव्याप्तिवारकतया तत्सार्थकोकर्त्तुं तदर्थमाह "हेतुवदि"ति दशाविशेषे व्याप्य-

यातम् अतएवानुपदं विरुद्धोऽपीत्यादिकम्। व्यर्थेति। विशेषणं पक्षवृत्तित्वम्। साध्याव्याप्यत्व इति। हेत्वाभासत्वं हेतुवदाभासमानत्वं वत्यर्थस्य वृत्तिमत्त्वम् एवञ्च साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधिरूपवत्त्वमर्थः। साध्यतदभाववद्वृत्तित्वं साधारण्यं, निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यं तच्च व्याप्तिद्वयग्रहविरो-

---

विरुद्धयोरप्यसाधारणत्वात् तयोः प्रत्येकं यथाश्रुतलक्षणघटकदलद्वयविरहाद*व्याप्तिः एवं हेत्वाभासपदस्य वृत्तिमदर्थकत्वेऽवृत्तेरपि साध्यतदभाववद्व्यावृत्तत्वेनासाधारणतया तत्राव्याप्तिरतः पर्य्यवसितार्थमाह "एवञ्चेति" ननु साध्याभाववद्वृत्तित्वं साधारण्यं साध्यवद्वृत्तित्वञ्चासाधारण्यं तच्च साध्यव्याप्तिग्रह एव विरोधि न तु साध्याभावव्याप्तिग्रहेऽपीति कथं तत्संग्रह इत्यत आह "साध्येति" साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धतया तज्ज्ञानं वृत्तिमत्त्वग्रहप्रतिबन्धकं इत्यभिप्रेत्य "निश्चितेति" "तच्च" तादृशं साधारण्यमसाधारण्यञ्च "व्याप्तिद्वयेति" साध्यव्याप्तिसाध्याभावव्याप्ती इत्यर्थः। साध्यस्य साध्याभावाभावतया साध्याभावनिरूपितव्याप्तिग्रहे साध्यवद्वृत्तित्वस्य ज्ञानं प्रतिबन्धकमिति तद्घटितस्य साधारण्यस्य साध्याभावव्याप्तिग्रहविरोधित्वमेव साध्याभाववद्व्यावृत्तत्वस्य ज्ञानमपि साध्याभावसामानाधिकरण्यघटितसाध्याभावव्याप्तिग्रहे प्रतिबन्धकमिति तद्घटितस्यासाधारण्यस्यापि तथात्वमिति भावः इदयमित्यस्वरससूचनाय स च साध्याभावाभावत्वेन साध्यविषयकतद्वृत्तित्व-

---

* ख०, अव्याप्तिरेव हेत्वाभासपदस्य।

धीति हृदयम्। असिद्धिविशेषत्ववृत्तित्वं वृत्तिमत्त्वग्रहविरोधि, साध्यतदभाववद्वावृत्तत्वमपि यदीदृशं तदा असिद्धिरेव, नो चेदिद-मेवासाधारण्यं बोध्यम्। साध्याप्रसिद्ध्यादिवारणाय विशिष्टसाध्य-साधनग्रहाविरोधित्वं वाच्यं। व्यापकसामानाधिकरण्यमिह व्याप्यत्वं।

---

ज्ञानस्यैव साध्याभावाभाववदवृत्तत्वघटितस्य साध्याभावे हेतुसमाना-धिकरणाभावप्रतियोगित्वघटितस्य वा साध्याभावव्याप्यत्वस्य ग्रहे प्रतिबन्धकतया साध्यतावच्छेदकरूपेण साध्यविषयकतदवृत्तित्व-ज्ञानस्य तदप्रतिबन्धकत्वं निश्चितसाध्यादिमद्वावृत्तत्वज्ञानस्य साध्यादि सामानाधिकरण्यसामान्याभावाविषयकतया साध्यादिव्याप्तिग्रहा-प्रतिबन्धकत्वञ्च, विशेष्यदलप्रयोजनं स्फुटयति "असिद्धिविशेष" इति स्वरूपासिद्धिर्व्याप्यत्वासिद्धिर्व्वेत्यर्थः। एतच्चालच्यतालाभाय ननु निश्चयाघटितस्य साध्यतदभाववद्वावृत्तत्वस्य वृत्तिमत्त्वग्रहविरोधितया एतदनन्तर्भावे तस्याधिकहेत्वाभासतापत्तिरित्यत आह "साध्येति" "यदीदृशं" यदि वृत्तिमत्त्वग्रहविरोधि, वृत्तिमत्त्वग्रहे ग्राह्याभावाव-गाहितया तत्सामान्याभावावगाहिज्ञानमेव विरोधि नत्वेकविशेषा-भावविशिष्टापरविशेषाभावरूपसाध्यतदभाववद्वावृत्तत्वज्ञानमित्य-स्वरसात् यदीति निष्कृष्टमताभिप्रायेणाह "नोचेदिति" "इदमेव" निश्चयाघटितं साध्यतदभाववद्वावृत्तत्वमेव एवकारेण निश्चय-घटितस्य व्यवच्छेदः नन्वत्र साध्यादिव्याप्यत्वं साध्यादिमदन्यावृत्तित्वे सति साध्यादिमद्वृत्तित्वं तदा तु द्वितीयलक्षणा*भेदः साध्यवन्मात्र-

---

* क०, द्वितीयलक्षणार्थाभेदः।

तेन च द्वितीयस्य भेदः। रीतिस्तुल्यैव। केचित्तु असाधारण्या-

---

वृत्त्यादिपदस्यापि तादृशव्याप्तिसमानार्थकत्वादित्यत आह "व्याप-के"ति द्वितीयलक्षणस्यापि यथाश्रुतार्थपरत्वे पूर्व्ववद्व्याप्यविरुद्धयो-र्द्दशाविशेषेऽसाधारणयोरसंग्रह इत्यत आह "रीतिरिति" तत्रापि साध्यतदभाववन्मात्रवृत्तित्वग्रहविरोधिवृत्तिमत्वग्रहाविरोधि-धर्म्म-वत्त्वमेव विवक्षणीयमित्यर्थः उपाध्यायमतमाह "केचित्त्विति" असा-धारण्याभावकालः प्रकृतहेतुनिष्ठासाधारण्याभावस्याच्छेदकः क्षणः तेन यदा शब्दत्वादेरसाधारण्यं तादृशक्षणस्य घटत्वादिनिष्ठा-साधारण्याभावावच्छेदकत्वेऽपि न क्षतिः। अथ शब्दादौ साध्य-सन्देहदशायां शब्दत्वादेरसाधारण्यव्यवहारप्रयोजकस्य तत्कालीन-साध्यादिनिश्चयविषयीभूतघटादिवृत्तित्वविरहस्य शब्दादौ साध्या-दिनिश्चयदशायामपि तत्र सत्त्वात् प्रकृतहेतुनिष्ठासाधारण्या-भावस्याप्रसिद्ध्याऽव्याप्तिः न च तत्कालीनसाध्यादिनिश्चयविषयीभूत-धर्म्मिव्यावृत्तत्वरूपासाधारण्यघटकतत्कालादिविरहात्तदानीं तद्घ-टितासाधारण्यविरहोऽक्षत एवेति वाच्यं प्रतियोगिकोटिविशेषणा-सत्त्वस्याभावीयविशिष्टाभावाप्रयोजकत्वात् अन्यथा दण्डाद्यसत्त्वे दण्डविशिष्टपुरुषाभावादेरिव दण्डविशिष्टपुरुषाभावाद्यभावस्यापि सत्त्वप्रसङ्गात् यदि च प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतर-निश्चयक्षण एव असाधारण्याभावकालेत्यनेन विवक्षित इत्युच्यते तदा शब्दोऽनित्यः शब्दत्वादित्यादौ यदि क्वचिदपि साध्यस्य साध्याभावस्य वा निश्चयो नास्ति तदा सव्यभिचारत्वप्रसङ्गः तादृश-

लक्षणस्य प्रकृतहेतुमद्विशेष्यकसाध्यादिनिश्चयस्याप्यनधिकरणत्वेन तदा तादृशनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्यभावस्य हेतौ सत्त्वात् तदा चासाधारण्यघटकसाध्यादिनिश्चयासत्त्वेनासाधारण्यस्य च विरहेण इष्टापत्तेरयोगात् प्रकृतहेतुनिष्ठासाधारण्यघटको यो यस्तदन्यक्षणस्य विवक्षणे तु यादृशसाध्यकस्थले यादृशसाधारण्यस्य हेतोः कदापि नासाधारण्यं तत्राव्याप्तिः प्रकृतहेतुनिष्ठासाधारण्यस्याप्रसिद्धेः नैवं तत्तत्कालावच्छिन्नत्वविशिष्टस्य तत्तत्कालीनसाध्यादिनिश्चयविषयव्यावृत्तत्वरूपासाधारण्यस्य प्रकृतहेतुनिष्ठाभावावच्छेदककाल एवासाधारण्याभावकालः हेतुमति साध्यादिनिश्चयदशायां कालान्तरावच्छिन्नस्य कालान्तरघटितासाधारण्यस्याभावकूटो हेतौ सुलभ एव यादृशसाधारणहेतोः कदापि नासाधारण्यं तत्राप्यन्ततो गगनादिनिष्ठप्रकृतसाध्यकासाधारण्यस्याभावः प्रसिद्ध एवेति न दोषः अथवा प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्वकिञ्चिद्विशेष्यकसाध्यतदभावनिश्चयवत्वोभयाभाववान् क्षण एवासाधारण्याभावकालेत्यनेन विवक्षितः शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि न साध्यस्य तदभावस्य वा निश्चयस्तत्क्षणे प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्वसत्त्वेऽपि साध्यतदभावनिश्चयवत्त्वाभावेनोभयाभावोऽक्षत एवेति तदा न सव्यभिचारताप्रसङ्गः। प्रकृतहेतुनिष्ठासाधारण्यघटको यो यः क्षणस्तदन्यक्षण एव विवक्षणीयः। यत् साध्यकस्थले यस्य साधारणस्य हेतोः कदापि नासाधारण्यं तत्साध्यकस्थलीयक्षणेऽसाधारण्याभावकालावच्छिन्नत्वं नोपादेयमेव साध्यसाधन-

भावकालावच्छिन्नसाध्यतदभावव्याप्तिशून्यत्वं विवक्षितं विशेषणा-भावात् वस्तुतो व्याप्यस्य विरुद्धस्य वा असाधारणस्य संग्रह इत्याकू-तच्चिन्त्यम्। व्यर्थेति। विरोधादेर्वारकं साध्याभावेत्यादि व्यर्थं तस्य

भेदेनलक्षणभेदादित्यपि केचित् "विशेषणाभावात्" असा-धारण्याभावकालावच्छिन्नत्वरूपं यद्व्याप्तिद्वयस्य विशेषणं तदभावात्। "संग्रहः" तादृशविशेषणविशिष्टव्याप्तिद्वयस्याभाववत्त्वं एतन्मते च पूर्व्वलक्षणे साध्याभाववदवृत्तित्वघटिताया उत्तरत्र च तदन्या-वृत्तित्वघटिताया व्याप्तेरनुप्रवेशाल्लक्षणयोर्भेदः स्वव्यापकसाध्य-सामानाधिकरण्यरूपव्याप्तेरभावस्य निवेशयितुमशक्यः तादृशव्याप्तेः स्वत्वघटिततया हेतुभेदेन भेदात् साधारणहेतुकस्थले तदप्रसिद्धा अभावग्रहासम्भवात् शिरोमणिव्याख्यायास्तु तादृशव्याप्तेरप्रसिद्धा-वपि तद्घटकपदार्थानां परस्परोपश्लेषावगाहिज्ञानविरोधिताया एव निवेशनेनानुपपत्त्यभावात् व्यापकसामानाधिकरण्यमिहव्याप्यत्व-मिति तदुक्तिसङ्गतिः एवमेतन्मते दुष्टलक्षणपर एवायं ग्रन्थः न तु दोषलक्षणपरोऽपि तादृशव्याप्तिद्वयशून्यत्वस्य व्यभिचारपदार्थत्वा-भावादित्यवधेयम्। "तच्चिन्त्यमिति" चिन्तावीजन्तु असा-धारणशरीरे तत्तत्पुरुषीयनिश्चयनिवेशस्यावश्यकतया सामान्य-लक्षणस्य पुरुषविशेषनियन्त्रितत्वं, न चेष्टापत्तिः तथा सति साधा-रणहेतावप्यमुकं प्रत्ययं व्यभिचारीति प्रत्ययप्रसङ्गात् एवं सव्यभि-चारपदस्य पारिभाषिकत्वमपि इतरभेदानुमाने वैयर्थ्यसम्भवे असाधकतानुमाने वैयर्थ्यपरतया व्यर्थविशेषणत्वादिति मूलव्याख्या-

पार्थक्ये प्रमाणाभावादिति भावः। प्रथममित्यादि गगनमित्यादि च दूषणं यथाश्रुते। नापीत्यादि। सपक्षविपक्षत्वावच्छिन्नव्यावृत्तत्व

---

नमनुचितमित्याशयेन इतरभेदानुमाने वैयर्थ्यपरतयैव मूलं व्याचष्टे "व्यर्थेती"ति विरोधादेरित्यादिना अवृत्तित्वपरिग्रहः "साध्याभावेत्यादीति" साध्याभावव्याप्तिग्रहविरोधित्वं वृत्तिमत्त्वग्रहाविरोधित्वञ्चेत्यर्थः "तस्य" विरोधादेः "पार्थक्ये" व्यभिचारपदार्थवह्निभूतले "प्रमाणाभावादिति" तथाच विरोधादावपि व्यभिचारपदार्थरूपपक्षेतरभेदसत्त्वेन तद्भावत्त्वकविशेषणानवच्छिन्नस्येतरभेदानुमापकत्वसम्भवादितिभावः। हेत्वाभासपदस्यान्यथाव्याख्यानात् दुष्टहेतुरूपहेत्वाभासत्वस्य लक्षणाघटकत्वात् प्रथममित्यादिदूषणस्यासङ्गतिः एवं गगनमनित्यं शब्दाश्रयत्वादित्यादौ हेतोः साध्याभावव्याप्यत्वेऽपि साध्याभावव्याप्तिग्रहविरोधिदर्शितधर्म्मवत्त्वं तत्राक्षतमेवेति तत्राव्याप्तिदानमप्यसङ्गतमित्यतो यथाश्रुतार्थे तादृशदोषद्वयं सङ्गमयति "प्रथममिती"ति एकमात्र सपक्षविपक्षस्थले सर्व्वसपक्षाद्यप्रसिद्धिरित्याशङ्क्य व्याचष्टे "सपक्षेति" सपक्षवृत्तित्वावच्छिन्नाभावो विपक्षवृत्तित्वावच्छिन्नाभावश्चेत्यर्थः सर्व्वतद्व्यावृत्तत्वं सर्व्वसपक्षविपक्षव्यावृत्तपदार्थः तावतैव यत्किञ्चित्सपक्षविपक्षव्यावृत्तयोर्व्याप्यविरुद्धयोर्नातिव्याप्त्यवकाश इति भावः सपक्षगतत्वविपक्षव्यावृत्तत्वयोर्व्विशेषणयोर्व्विरुद्धातिव्याप्तिवारकतया सार्थक्यं सम्भवत्येव इत्याशङ्क्य दूषकतायामनुपयोगित्वरूपवैयर्थ्यपरतां व्यर्थविशेषणत्वादिति मूलस्याह "सपक्षेति" "व्याप्यविरुद्धयो"रिति

सर्व्वतद्व्यावृत्तत्वं। व्यर्थेति। सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयो र्दूषकतायामनुपयोगादिति भावः। पक्षातिरिक्तेत्यादि। व्याप्यविरुद्धयोरसाधारणयोः संग्रहाय पक्षातिरिक्तपदे। पक्षत्वं सन्दिग्धसाध्य-

---

शब्दोऽनित्यःशब्दत्वादित्यादौ व्याप्यस्य हेतोः साध्यवन्मात्रवृत्तित्वेपि पक्षेऽपि वृत्तेः पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वमक्षतमेव एवं शब्दो नित्यः शब्दत्वादित्यत्र विरुद्धस्य हेतोः साध्याभाववन्मात्रवृत्तित्वेऽपि पक्षेऽपि वृत्तेः पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वमक्षतमेवेति द्वयोःसंग्रह इति भावः। पक्षातिरिक्तेत्यत्र पक्षपदस्य तत्तद्धर्म्मिमात्रपरत्वे पक्षे साध्यसाध्याभावान्यतरनिश्चयदशायां शब्दोऽनित्यःशब्दत्वादित्यादावतिव्याप्तिः सिद्ध्यभावरूपपक्षताविशिष्टपरत्वे पक्षे सिद्धिदशायां तत्र विशिष्टातिरिक्तत्वसत्त्वोपगमात् अतिरिक्तान्तस्य पक्षताशून्यपरत्वोपगमाद्वातिप्रसङ्गवारणसम्भवे शब्दो नित्यः शब्दत्वादित्यादौ बाधनिश्चयदशायां अतिप्रसङ्गोदुर्व्वार एव सिद्धिबाधान्यतराभावरूपपक्षताविलक्षणे च गौरवमतः संशयरूपपक्षतापरतया व्याचष्टे "पक्षत्वमिति" सन्दिग्धसाध्यकत्वं विषयतासम्बन्धेन साध्यसन्देहविशिष्टत्वं कालान्तरीणसंशयविषयेऽपि संशयरूपविशेषणासत्त्वदशायां तद्विशिष्टभेद उपगम्यते अतिरिक्तान्तं वा पक्षताशून्यपरमतः साध्यादिनिश्चयदशायां नातिप्रसङ्गः। यदा पक्षे साध्यतदभावयो र्न निश्चयो नापि संशयः तदा शब्दोऽनित्यः शब्दत्वादित्यादे र्नासाधारणता किन्तु यथायथं

कत्वं। धूमेत्यादिदूषणं यथाश्रुते न तु सप्तमीसमासात् पक्षाति-रिक्ते वर्त्तते यत् साध्यवन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थे इति ध्येयम्। पक्षवृत्तीत्यादि। विरोधः साध्या-

सद्धेतुत्वं* विरुद्धत्वस्येति नाप्रसङ्ग इति भावः। पक्षातिरिक्तवृत्ति यत्साध्यतदभाववन्मात्रवृत्ति तदन्यत्वार्थकत्वे वह्निमान् धूमादि-त्यादौ नातिव्याप्तिसम्भवः भेदप्रतियोगितावच्छेदकघटकदलद्वयस्यैव तत्र सत्त्वेन विशिष्टभेदासत्त्वात् अतः पक्षातिरिक्तत्वस्य साध्यादिम-द्विशेषणत्वाभिप्रायकतया मूलं सङ्गमयति "धूमेत्यादीति" यथाश्रुते† पक्षातिरिक्तो यः साध्यादिमांस्तन्मात्रवृत्तिभिन्नत्वमित्यर्थे सप्तमी समासादित्यर्थे न तु दूषणमिति योजना सप्तमीसमासलभ्ये एतादृ-शार्थे न दूषणमित्यर्थः। ह्रदो धूमवान् वह्नेरित्यादिसाधारणे शब्दो नित्यः शब्दत्वादित्याद्यसाधारणे च यथाश्रुतलक्षणस्याव्याप्तिं व्याचष्टे "पक्षवृत्तीत्या"दि पक्षवृत्तित्वस्य साध्यसामानाधिकरण्यस्य च यो ग्रहस्तदविरोधीत्यर्थः। अनुमित्यौपयिकस्येति समासेन लिखनं जनकज्ञानविषयेत्यस्य समुदायव्याख्यानतायामेव सम्भवतीत्यतो-व्यासेन लिखनं सपक्षसत्त्वादेर्नानुमितिजनकत्वमपि तु तज्ज्ञान-स्यैवेत्यौपयिकपदस्य जनकार्थकत्वं न सम्भवतीति तद्व्याचष्टे "जनक-

* ख०, विवक्षितस्येति।

† ख०, यथाश्रुते पक्षातिरिक्तो यः साध्यादिमांस्तन्मात्रवृत्तिभिन्नत्व-मित्यर्थे न दूषणमिति योजना सप्तमीसमासलभ्ये एतादृशार्थे न दूषण-मित्यर्थः।

सामानाधिकरण्यं। पक्षवृत्तित्वसाध्यासामानाधिकरण्यग्रहविरोधी योऽनुमितेरौपयिकस्य जनकज्ञानविषयस्य सम्बन्धस्य सपक्षसत्त्वादेरभावस्तद्वत्त्वमित्यर्थः। सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असाधारण्यनिश्चये पक्षे साध्यसामानाधिकरण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वं। पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्तादृशो-

---

ज्ञानविषयस्ये"ति नन्वचासाधारण्येऽव्याप्तिः तस्य सपक्षव्यावृत्तत्वघटिततया साध्यवद्वृत्तित्वग्रहविरोधित्वादित्यत आह "सपक्षविपक्षव्यावृत्तत्वस्य चे"ति चस्त्वर्थे, सपक्षत्वं निश्चितसाध्यकत्वं "पक्षे" पक्षान्तर्भावे "न" "तस्य" असाधारण्यस्य "तज्ज्ञानविरोधित्वं" साध्यसामानाधिकरण्यज्ञानविरोधित्वं, साध्यवद्वृत्तित्वसामान्याभावज्ञानमेव साध्यसामानाधिकरण्यग्रहविरोधि न तु तद्विशेषाभावात्मकसपक्षव्यावृत्तत्वज्ञानमपीतिभावः। अथात्र विरुद्धहेतवो यद्यलक्ष्यास्तदा सपक्षवृत्तित्वाद्यभावादिकमादाय सर्व्वेषु तेष्वतिव्याप्तिः तेषां लक्ष्यत्वे साध्यसामानाधिकरण्यग्रहाविरोधित्वोपादानमनर्थकमेवेति चेन्न दुष्टलक्षणे विरुद्धा लक्ष्या एव उक्तविशेषणोपादानञ्च दोषलक्षणे विरोधातिव्याप्तिवारणायैवेति सपक्षविपक्षव्यावृत्तत्वस्यासाधारण्यस्येत्यत्र विपक्षपदं सम्पातायातमेवेति ध्येयम्। अत्र च यद्रूपविशिष्टविषयकत्वेनानुमितिजनकता तद्रूपावच्छिन्नाभावोऽवश्यं विवक्षणीयः अन्यथा सपक्षसत्त्वादेर्द्दित्वाद्यवच्छिन्नाभावमादायातिप्रसङ्गापातात् एवञ्च निश्चितसाध्यवद्वृत्तित्वत्वावच्छिन्नाभावासंग्रहः निश्चयांशज्ञानस्य अनुमित्यहेतुतया तद्घटिततादृशधर्म्मविशिष्टविषयितावत्त्वेनानु-

ऽभावस्तद्दत्वमर्थ इति केचित् ॥ पूर्व्वोक्तलक्षणानां यथोक्तरीत्या

मित्यत्रजनकत्वात् येन केनापि रूपेण यद्रूपाश्रयनिरूपितविषयिता-
वत्त्वेन जनकता तद्रूपावच्छिन्नाभावविलक्षणे च द्वित्वाद्यवच्छिन्ना-
भाववारणमशक्यमेवेति दूषणमशक्यसाधनमित्यवधेयम् उपदर्शित-
साधारणासाधारणयोः संग्रहाय मिश्रा अन्यथैवतल्लक्षणं व्याचक्षते
तदुपन्यस्यति "पक्षवृत्ताविति पक्षावृत्तित्वं न पक्षवृत्तौ विरोधस्य
न विरुद्धभिन्ने वर्त्तते इति न पर्व्वतो वह्निमान् महानसत्वात्
ह्रदत्वाद् वा इत्याद्योः स्वरूपासिद्धविरुद्धयोरतिव्याप्तिः सपक्ष-
विपक्षवृत्तित्वं तद्व्यावृत्तत्वस्य पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते इति
तदादाय उपदर्शितसाधारणासाधारणयोः संग्रहः एतत्कल्पेऽपि
पूर्व्ववत् विरुद्धा लक्ष्या एव विरोधस्य व्यभिचारितावारणायैव
विरुद्धान्यवृत्तित्वोपादानमित्यवधेयम् । अत्र च हेतुतावच्छेदक-
सम्बन्धेन पक्षवृत्तित्वविलक्षणमावश्यकं अन्यथा हेतुतावच्छेदकसम्बन्धेन
पक्षावृत्तेरपि येन केनचित् सम्बन्धेन पक्षवृत्तितया स्वरूपासिद्धेरपि
पक्षनिवृत्तितया तद्वारणासम्भवात् एवञ्च हेतुतावच्छेदकसम्बन्धेन
पक्ष त्तित्वं यत्राप्रसिद्धं तादृशव्यभिचारिण्यतिव्याप्तिः एवं गगने
साध्यनिश्चयदशायां घटः शब्दवान् घटत्वादित्यादौ असाधारणे
ऽव्याप्तिः सपक्षव्यावृत्तत्वस्य विरुद्ध एव वर्त्तमानत्वादित्यस्वरसः
केचिदित्यनेन सूचितः ॥ इति सव्यभिचार पूर्व्वपक्षगादाधरी ॥

ननु पूर्व्वपक्षग्रन्थोक्तलक्षणावलम्बनेन सिद्धान्तप्रणयनमसङ्गतं
तत्तद्दोषाणां जागरूकत्वादित्याशङ्कां निराकरोति "पूर्व्वोक्तेति"

# अथ सव्यभिचारसिद्धान्तः ।

उच्यते । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्याप्तिर्वा[1] तच्च साधारणत्वादि,[2] तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम् । यद्वा

---

यथामतं नाव्याप्त्यादिसम्भावना परन्तु तज्ज्ञानस्यानुमित्यप्रतिबन्धकतया तेषां हेत्वाभासतावच्छेदकत्वं न घटते, न घटतां किं तेन, तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्याशयेनाह उच्यते इति । सन्देहं प्रत्येव साधारण्यादिविशिष्टधर्म्मवद्धर्म्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्म्मज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभयेति । साध्यसन्देहजनकेति प्रकृतं

---

यथामतमिति यद्यन्मतमालम्ब्य यद् यल्लक्षणमभिहितं तत्तन्मते तत्र तत्र नाव्याप्त्यादिसम्भावनेत्यर्थः । तत्रासाधारणस्य संशायकतामते प्रथमं लक्षणं, व्याप्तिग्रहविरोधितामते तादृशविरोधि-

---

(१) अनुमितिविरोधिसम्बन्धाव्याप्तिर्वा अनैकान्तिकत्वमिति ।

(२) "नियोगः" एवमेतद्विधीयतामित्यादिरूपः, "पर्य्यनुयोगः" कथमेतदेवं कृतमित्यादिरूपकः ॥

ताघटितलक्षणं तेन विरोधित्वघटितलक्षणलक्ष्ये विरुद्धे संशय-प्रयोजकस्य सपक्षवृत्तित्वघटितसाधारण्यस्य विपक्षव्यावृत्तत्वघटितासाधारण्यस्य च विरहेऽपि प्रथमलक्षणस्य नाव्याप्तिः प्रथम-लक्षणालक्ष्ये तत्र च विरोधिताघटितलक्षणस्य नातिव्याप्तिरिति-भावः। तेषां कोटिद्वयोपस्थापकतावच्छेदकत्वादिरूपानुगत-धर्मावच्छिन्नानां तादृशरूपाद्यात्मकलक्षणानां हेत्वाभासतावच्छेद-कत्वं अनुमितिप्रतिबन्धकतायां विषयतया अवच्छेदकत्वं विभाग-मात्रेतिमात्रपदेन दुष्टव्यवहारव्यवच्छेदः दुष्टव्यवहारनियामकोऽनु मितिप्रतिबन्धकतावच्छेदकधर्म्म एव विभाजक इति नियमे मानाभावादिति भावः। नन्वत्र लक्षणे पक्षधर्म्मतापदानुपादा-नात् नित्यत्वादिसाध्यकस्थले कोटिद्वयोपस्थापकसाधारणधर्म्म-वत्ताज्ञानविषयीभूतद्व्यणुकादावतिव्याप्तिरित्याशङ्कां निराचिकी-र्षुरभिप्रायं वर्णयति "सन्देहमित्यादिना" एवकारेण कोट्युप-स्थितौ तादृशरूपेण हेतुताव्यवच्छेदः "तादृशधर्म्मेति" साधारण्या-दिविशिष्टधर्म्मेत्यर्थः मात्रपदेन धर्म्मिविषयकत्वस्य कोट्युपस्थिति-जनकतावच्छेदकघटकत्वव्यवच्छेदः तथा च कोटिद्वयोपस्थिति-जनकतावच्छेदकीभूता या विषयता तदवच्छेदकधर्म्मवत्त्वं नोक्तस्थले द्व्यणुकादौ अणुत्वादिविषयताया एव तथात्वादिति न तत्राति-व्याप्तिरितिभावः। अथैतन्मते साधारणधर्म्मवद्धर्म्मिज्ञानत्वेन हेतु-ताया आधिक्यात् गौरवमिति चेन्न भवन्मतेऽपि कोटिद्वयोपस्थितिं प्रति तेन रूपेण हेतुताया आधिक्यात् सम्बन्धिहस्त्यादिविशेष्यक-ज्ञानाद्धस्तिपकादिस्मृतेरिव तत् कोटिसहचरितधर्म्मविशेष्यकज्ञाना-

दपि तत्कोटिस्मृतेर्निर्विवादतया साधारणधर्म्मविषयकज्ञानत्वेन कोट्युपस्थितिहेतुताया उभयवादिसिद्धत्वात् तस्मात् कोट्युपस्थितौ साधारणधर्म्मवद्धर्म्मिज्ञानत्वेन संशयं प्रति च साधारणधर्म्मवद्धर्म्मि-ज्ञानजन्यकोट्युपस्थितित्वेन हेतुत्वमिति पूर्व्वपक्षलक्षणोपष्टम्भकम-तापेक्षया संशयं प्रति साधारणधर्म्मवद्धर्म्मिज्ञानत्वेन साधारणधर्म्म-ज्ञानजन्यकोट्युपस्थितित्वेन च हेतुतामतमेव सयुक्तिकं अथास्तु कोट्युपस्थितौ साधारणधर्म्मज्ञानत्वेनैव हेतुता तथापि संशये धर्म्मि-भाननियमाय तत्र साधारणधर्म्मवद्धर्म्मिज्ञानत्वेन हेतुत्वमफलं कोट्युपस्थितेः संशयहेतुतायां साधारणधर्म्मज्ञानजन्यत्वस्थले साधारणधर्म्मवद्धर्म्मिज्ञानजन्यत्वनिवेशादेव तन्नियमोपपत्तेः स्वतन्त्र-कारणताकल्पनापेक्षया क्लृप्तकारणतायामवच्छेदकगौरवस्योचित-त्वात् न च धर्म्मिज्ञानस्य संशये साक्षाद्धेतुताया अपि क्लृप्तत्वात् तत्र साधारणधर्म्मप्रकारकत्वमात्रं निवेश्यत इति नास्माकमपि स्वतन्त्रकारणताकल्पनं मानसेपि च विप्रतिपत्तिवाक्याधीनसंशये कोट्योरिव धर्म्मिणोऽपि पदजन्यैवोपस्थितिः कारणमितिपदजन्यत्वेन धर्म्मिज्ञानस्य विप्रतिपत्तिवाक्याधीनसंशये पृथक्कारणताया आवश्यकत्वात्तदन्यसंशयकारणतायां साधारणधर्म्मादिविषयकत्वान्त-र्भावे बाधकाभावादितिवाच्यं संशये साधारणासाधारणधर्म्म-वद्धर्म्मिज्ञानत्वेन हेतुताद्वयस्य तादृशतादृशधर्म्मज्ञानजन्यकोट्युप-स्थितित्वेन हेतुताद्वयस्य च कल्पनापेक्षया तादृशतादृशधर्म्म-विषयकत्वमनन्तर्भाव्य धर्म्मिज्ञानहेतुतायास्तादृशतादृशधर्म्मवद्धर्म्मि-ज्ञानजन्यकोट्युपस्थितित्वेन हेतुताद्वयस्य च कल्पने स्फुटतरलाघ-

वात् नैवं कोव्युपस्थितिकारणतायां तत्तत्कोटिसहचरित-धर्मवद्धर्म्मिविशेषविषयकज्ञानजन्यत्वनिवेशे धर्म्मिभेदेन गुरुतर-धर्म्मावच्छिन्नकारणताया आधिक्यापत्तेः तदपेक्षया धर्म्मिविशेष-मनन्तर्भाव्य तत्तत् कोटिसहचरितधर्मज्ञानजन्यकोव्युपस्थितित्वेन धर्म्मिविशेषमन्तर्भाव्य साधारणधर्मवद्धर्म्मिविशेषज्ञानत्वेन लघुशरी-रेण हेतुत्वस्य च कल्पयितुं युक्तत्वात् न चोपस्थितिकारणताव-च्छेदकशरीरे धर्म्मिणोऽनन्तर्भावेऽपि कार्य्यतावच्छेदकीभूतसंशयत्वस्य धर्म्मिविषयताघटितत्वात् कोव्युपस्थिते धर्म्मिभेदेन* कारणता-भेद आवश्यक इति वाच्यं संशयत्वशरीरे धर्म्मिविषयताया विशेष्य-तात्वेन किञ्चिद्धर्म्मावच्छिन्नविशेष्यतात्वेन वा सामान्यतो निवेश-नीयतया धर्म्मिभेदेन कारणताभेदानावश्यकत्वादिति दिक्। पूर्व्व-लक्षणोक्तातिप्रसङ्गवारणाय साध्यसन्देहजनकत्वस्य कोव्युपस्थिति-विशेषणताया आवश्यकत्वादच तदुपस्थापकपदादाननिबन्धनं तद-निवेशभ्रमं निराकुरुते "साध्यसन्देहेति" "प्रकृतं" प्रकरणवशात् सामान्यशब्दस्य विशेषपरतया प्राप्तं, तथाच साध्यसन्देहजनिका या साध्योपस्थितिस्तज्जनकतावच्छेदिका सती तथाविधसाध्याभावो-पस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकतापर्य्या-प्त्यधिकरणधर्मवत्त्वं तत्त्वमिति पूर्व्वोक्तदिशा लक्षणार्थो निष्कर्षयि-तव्यः वह्निसाहचर्य्यतज्ज्ञाभावतज्ज्ञात्तत्त्वावच्छिन्नधूमादिविषयतायाः पूर्व्वदर्शितरीत्या तथाविधसाध्यसाध्याभावोपस्थितिजनकतावच्छे-

* ख० कार्य्यकारणभावभेदः आवश्यकः।

यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनुभवसाधारणी सन्देह-जननी, नियामकन्तु साधारण्यादिविशिष्टधर्म्मवत्ताज्ञानम्, अतएव

---

दकत्वेऽपि तामादायातिप्रसङ्गः पूर्व्ववदेव वारणीयः समवायादि-घटितसाधारण्यमादाय संयोगादिना धूमादेर्व्वह्न्यादिसाध्यक-सव्यभिचारतावारणाय प्रकृतसम्बन्धेन यत्साध्यवद्वृत्तित्वं साध्याभाव-वद्वृत्तित्वञ्च तद्घटितत्वेन विषयतावच्छेदकधर्म्मो विशेषणीयः असा-धारण्यशरीरेऽप्यभावप्रतियोगितया साध्यादिमद्वृत्तित्वनिवेशान्न तदसंग्रहः साधारणधर्म्मवद्धर्म्मिज्ञानसत्त्वे उद्बोधकान्तराधीनकोटि-स्मरणादनुभवाघटककोट्युपस्थितेश्च संशयोपगमे क्षतिविरहात् विशेषणज्ञानादिमुद्रया कोट्युपस्थितिहेतुतयैवोपपत्तेः साधारण-धर्म्मज्ञानजन्यकोट्युपस्थितित्वेन स्वतन्त्रहेतुताकल्पनमनर्थकमिति व्याख्यातकल्पे साध्यसन्देहजनकत्वरूपकोट्युपस्थितिविशेषणस्याव्याव-र्त्तकतया विलक्षणजनकतायाश्चासत्त्वेन निवेशनासम्भवात् उक्ताति-प्रसङ्गो दुर्व्वार एवेत्यभिप्रेत्य तादृशनिष्कृष्टमते प्रकारान्तरेण लक्षणं व्याचष्टे "यथाकथञ्चिदिति" साधारणधर्म्मज्ञानजन्या तदजन्या वेत्यर्थः विशेषणज्ञानादिमुद्रया क्लृप्तकारणतात एव निर्व्वाहः न तु स्वातन्त्र्येण हेतुत्वमिति सूचयितुं "स्मृत्यनु-भवसाधारणीति" नन्वेवं साधारण्यादिविशिष्टधर्म्मिज्ञानशून्य-काले कथं न संशय इत्यत आह "नियामक"मिति नियामकं तादृशधर्म्मदर्शनदशायामेव संशय इति नियमनिर्व्वाहकं साधारण्या-दीत्यस्य साक्षात् संशयहेतुभूतमित्यादिः आदिपदादसाधारण्य-

धारावाही सन्देह इति मते तु धर्म्मितावच्छेदकविशिष्टे धर्म्मिणि

परिग्रहः अतएव अनुभवसाधारण्याः कोट्युपस्थिते र्हेतुत्वादेव धारावाही सन्देहः अविरलोत्पत्तिकसन्देहचितयादिकं साधारणधर्म्मज्ञानजन्यकोट्युपस्थितित्वेन संशयहेतुत्वे स्मरणात्मिकोपस्थितेरेव तथात्वात् साधारणधर्म्मवद्धर्म्मिविषयकतथाविधैकोपस्थित्या संशयद्वयजननसम्भवेऽपि संशयान्तरोत्पत्तौ तथाविधस्मृत्यात्मकोपस्थित्यन्तरस्यापेक्षणीयतापत्त्या अविरलग्नसंशयचितयादिकं नोपपद्यते एतन्मते तु संशयात्मककोट्युपस्थितेरपि संशयान्तरोत्पादसम्भवेन अन्तराकोटिस्मरणानपेक्षणात् साधारणधर्म्मवद्धर्म्मिविषयकद्वितीयादिसंशयात् तदग्रिमक्षणेषु संशयान्तरोत्पादे वाधकाभावः न चास्मन्मतेऽपि संशयात्मककोटिज्ञानस्यापि साधारणधर्म्मज्ञानजन्यतयान्तराकोटिस्मृतिं विनैव संशयान्तरोत्पादः सम्भवतीति वाच्यं अवच्छेदकभेदेन भिन्नयोः स्मृतिसंशयनिष्ठतादृशजन्यतयोरननुगततया स्मृतिनिष्ठजन्यताया एव निवेशनीयतया स्मरणापेक्षया आवश्यकत्वादितिभावः। स्वसमानाधिकरणावच्छिन्न-स्वाव्यवहितोत्तरत्वसम्बन्धेन साधारणधर्म्मज्ञानविशिष्टोपस्थितित्वेन हेतुत्वोपगमे तु संशयादपि संशयः सम्भवतीति गौरवमेव उपस्थितेः स्वतन्त्रहेतुतायां वाधकमित्यवधेयम्। "धर्म्मितावच्छेदके"ति धूमवान् पर्व्वतो वह्निमान्नवेति संशये धर्म्मितावच्छेदकज्ञानमुद्रया पर्व्वतत्वाद्यवच्छिन्नविशेष्यकधूमत्वादिविशिष्टवत्ताज्ञानस्य जनकतया धूमत्वादिमत्त्वमादायाति-

यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यं। कोटिद्वय-सहचरितत्वादिना ज्ञातस्य ऊर्द्ध्वत्वादेरूर्द्ध्वत्वत्वादिना धर्म्मिणि ज्ञान-

प्रसङ्गवारणाय धर्म्मितावच्छेदकविशिष्ट इति धर्म्मितावच्छेदक-पदं फलीभूतसंशयधर्म्मितावच्छेदकतापर्य्याप्त्यधिकरणपरं अन्यथा पर्व्वतत्वादेरपि दर्शितसंशयधर्म्मितावच्छेदकघटकतया उक्तातिप्रसङ्ग-वारणासम्भवात् एवञ्च तद्धर्म्मपर्य्याप्तधर्म्मितावच्छेदकताक यत्किञ्चित् संशयनिरूपितायां जनकतायामवच्छेदकीभूता या तद्धर्म्मनिष्ठ-धर्म्मितावच्छेदकतादिरूपकप्रकारता तन्निरूपितावच्छेदकतापर्य्या-प्त्यधिकरणधर्म्मवत्त्वमितिप्राङ्निरुक्तोऽर्थः पर्य्यवसितः तेन सत्तावान् जातेरित्यादौ सत्ताभाववत् समवेतत्वाद्यप्रसिद्ध्या यद्रूपपदेन सत्तावत् समवेतत्वमात्रोपादानसम्भवेनातिव्याप्तिरिति परास्तं "व्यक्तव्यं" व्याख्येयं एवञ्च मूलस्थं उभयकोट्युपस्थापकपदं संशाय-कार्थमित्यभिप्रायः। मूलमपेच्य निष्कृष्टमते स्वातन्त्र्येणैव एतल्लक्षण-मिति केचित् प्राचीनास्तु साधारण्याद्यवच्छिन्नप्रकारताशालि-ज्ञानत्वेन संशयजनकता पुरुषत्वतदभावसहचरितत्वेन यदा कदा-चिज्ज्ञातस्योद्ध्वत्वादेरूर्द्ध्वत्वत्वादिमात्रेण ज्ञानादप्ययं पुरुषो न वेतिसंशयात् किन्त्वनुद्बुद्धसंस्कारान्यसाधारण्यादिप्रकारकविशिष्ट-धर्म्मिज्ञानत्वेनैव, साधारण्यादिप्रकारकत्वञ्च संस्कारज्ञानसाधारण-मतस्तत्प्रकारकज्ञानसत्त्वेऽपि तज्जन्यतथाविधसंस्कारविशिष्टोर्द्ध्वत्वादि-ज्ञानात् संशयनिर्व्वाहः वैशिष्ट्यञ्च स्वविशेष्यतावच्छेदकावच्छिन्न-प्रकारकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन अतएवैकधर्म्मावच्छिन्न-

मेव संशयजनकं न तु तदानीं साहचर्य्यज्ञानमपेक्षत इति नयेत् तद्रूपविशिष्टत्वेन गृहीतस्य धर्म्मस्य धर्म्मिवृत्तिताज्ञानं तथा तद्वत्त्वमेव

साधारण्यादिप्रकारकज्ञानादिसहितादपरधर्म्मावच्छिन्नप्रकारक-धर्म्मिज्ञानान्नसंशयः ईदृशापत्तिवारणायैव एकविशिष्टापरस्य हेतुता स्वीक्रियते न तूभयोः पृथक् कारणता एकविशिष्टापरत्वेन हेतुत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताद्वयमात्रं, पृथक्का-रणामते एकधर्म्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकज्ञानादि-सहितादन्यधर्म्मावच्छिन्नप्रकारकधर्म्मिज्ञानात् संशयापत्तेः तत्त-द्धर्म्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकत्वेन तत्तद्धर्म्मावच्छिन्न-प्रकारकधर्म्मिज्ञानत्वेन च हेतुताकल्पनमन्तरेण दुर्व्वारतया तादृश-हेतुतास्वीकारे ऊर्द्ध्वत्वादिरूपविषयतावच्छेदकानन्तधर्म्मभेदेन-हेतुताया आनन्त्यं स्यादिति वदन्ति। तन्मते यथा व्याख्यातलक्षणे शुद्धधूमत्वाद्यवच्छिन्नप्रकारताया अपि वह्न्यादिसन्देहजनकताव-च्छेदकत्वात् शुद्धधूमत्वादिकमादायातिप्रसङ्गवारणमशक्यमिति तन्मते कल्पान्तरमाह कोटिद्वयेति ऊर्द्ध्वत्वादिनेत्यस्य केवलेत्यादिः "तदानीं" संशयप्राक्काले "यद्रूपेति" यद्रूपावच्छिन्नधर्म्मविषयक-विशिष्टत्वेन यत्किञ्चित् संशयजनकता तद्रूपवत्त्वमित्यर्थः *यत्कि-ञ्चित्संशयजनकतावच्छेदकतावच्छेदकतावच्छेदकवैशिष्ट्यघटकविशेष्य-

* क० यत्किञ्चित् संशयजनकतावच्छेदकतावच्छेदकवैशिष्ट्यघटक-विशेष्यतानिरूपितप्रकारतात्वनिरूपिता या निरूपकत्वसंसर्गावच्छिन्ना-वच्छेदकता तदाश्रयविषयतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मवत्त्वमिति तु पर्य्यवसितार्थः।

वाच्यम्। तच्चेत्यादि। ननु असाधारणं न साध्यतदभाववद्व्यावृत्तत्वं वृत्तिमतस्तथात्वासम्भवात् एककोटिव्याप्यस्यैव एककोटिमद्व्यावृत्त-

तानिरूपितप्रकारतापर्य्याप्त्यधिकरणधर्म्मवत्त्वमिति तु पर्य्यवसितार्थः। तच्चेत्यादिमूलग्रन्थः साधारणासाधारणरूपसंशयप्रयोजकरूपमादायलक्षणसङ्गमनपरः तच्च यादृशसाधारणस्य संशयप्रयोजकत्वं विचारसहं तत्सङ्ग्रहेतुसाधारणमिति दोषे लक्षणान्तरमूत्थापयितुं तादृशग्रन्थं धारयति "तच्चेत्यादीति" असाधारणं संशयप्रयोजकीभूत असाधरणपदार्थः। "वृत्तिमत" इति तथाच शब्दोनित्यः शब्दत्वादित्यादावसाधारणे ऽव्याप्तिरितिभावः। ननु वृत्तिमतो नासाधारणमुपगन्तव्यं किन्त्ववृत्तेरिति नैतद्दोषावकाश इत्यत आह "एककोटौ"ति व्याप्यस्य व्याप्यतया गृहीतस्य व्यावृत्तस्य तदवृत्तितया गृहीतस्य एतेन एककोटिमद्व्यावृत्तस्यैककोटिव्याप्यतायाः आवश्यकत्वेऽपि न भेदघटितेवार्थासङ्गतिः तद्वदवृत्तित्वञ्च न तदभावव्याप्यत्वं तच्छरीरे तदभावाभावत्वेन तस्या निवेशादित्यवधेयं। विशेषदर्शनतया संशयविरोधित्वादिति पुरुषत्वाभाववदवृत्तिशाखादिमानयमित्याद्याकारकनिश्चयदशायामिव पुरुषावृत्तिशाखादिमानित्यादिनिश्चयदशायामपि पुरुषत्वादिविशिष्टबुद्ध्यनुत्पादस्य सर्व्वानुभवसिद्धत्वात् तद्विशिष्टबुद्धौ तद्वदवृत्तित्वेन गृहीतधर्म्मवत्ताज्ञानस्य प्रतिबन्धकतायाः आवश्यकत्वादिति भावः तथाच निरुक्तसाधारणविशिष्टवत्ताज्ञानस्य संशयप्रतिबन्धकतया संशयजनकत्वासम्भवात् कथं तादृशासाधारणस्य

स्यापि धर्म्मस्य बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च। सत्प्रतिपक्षे च परामर्शाप्रामाण्यसंशयोत्तरमेव साध्यसन्देहात्। नापि निश्चित-

---

संशयप्रयोजकता न च तादृशज्ञानस्य संशयप्रतिबन्धकत्वेऽपि-तज्जन्यकोट्युपस्थितेः संशयजनकत्वं सम्भवत्येव तन्नाशानन्तरं तज्जन्यकोट्युपस्थित्या संशयजननसम्भवात् असाधारणधर्म्मवद्धर्म्मि-ज्ञानस्य अतएव बाधकात् साक्षाद्धेतुत्वासम्भवेन तज्जन्यकोट्यु-पस्थितित्वेन हेतुतायां गौरवस्याकिञ्चित्करत्वादिति तादृशकार्य्य-कारणभावघटितलक्षणपरतयैव मूलं व्याख्येयमिति वाच्यं अग्रे निर्व्वाच्यास्यासाधारण्यस्य बुद्धेः संशयाविरोधितया तज्ज्ञानस्यैव साक्षात् संशयजनकत्वसम्भवेन गौरवादुक्तरूपेण कोट्युपस्थितेर-हेतुत्वात् कोटिस्मृतिजनकताघटितलक्षणस्यासम्भवात् संशयजनक-ताघटितलक्षणकरणे च तादृशासाधारण्यमादाय व्याप्यविरुद्धयो-रतिव्याप्तेः ननु सत्प्रतिपक्षस्थलनदशायामिव कोटिद्वय-वद्व्यावृत्तधर्म्मवत्ताज्ञानदशायामपि संशयोत्पत्तिरनुभवसिद्धैवेति तदभावव्याप्यवत्ताज्ञानप्रतिबन्धकतायां तद्व्याप्यवत्ताज्ञानस्येव तत्को-टिमदवृत्तिमत्ताज्ञानप्रतिबन्धकतायामपि तदभाववदवृत्तिधर्म्म-वत्ताज्ञानस्योत्तेजकत्वमगत्या कल्पनीयमिति कोटिद्वयवद्व्यावृत्तधर्म्म-वत्ताज्ञानस्य संशायकत्वमव्याहतमेव येन रूपेण प्रतिबन्धकता तेनैव रूपेण जनकतानुपगमादित्यत आह "सत्प्रतिपक्षे चे"ति विरोधिकोटिद्वयव्याप्यवत्ताज्ञानसमय इत्यर्थः "परामर्शाप्रामाण्य-संशये"ति तथाच तुल्ययुक्त्या प्रकृतेऽपि तत्तत्कोटिमदवृत्तित्वविशिष्ट-

साध्यतदभाववद्व्यावृत्तत्वम् तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्त-द्व्यावृत्तत्वं, येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्व्यावृत्तत्वं वा। आद्ये सर्व्वाणि साध्यव्याप्यवन्ति साध्यवन्ति, सर्व्वाणि वा साध्य-

---

वत्त्वाज्ञाने प्रामाण्यसंशयादेव संशयः स्वीक्रियते इति नैककोटिमद्व्यावृत्तधर्म्मवत्ताज्ञानप्रतिबन्धकतायामपरकोटिमद्व्यावृत्तधर्म्म-वत्ताज्ञानस्योत्तेजकत्वं प्रामाणिकमप्रामाण्यज्ञानोत्तेजकतयैवोपपत्तेः अप्रामाण्यज्ञानास्कन्दितस्यैव च ज्ञानस्य जनकतया निरुक्त-साधारण्यस्य बुद्धेर्जनकत्वोपगमे प्रतिबन्धकतावच्छेदकरूपेणैव जनकताप्रसङ्ग इतिभावः "निश्चितसाध्यतदभाववद्व्यावृत्तत्व"मिति असाधारण्यमित्यनुषज्यते "येन येन रूपेणेति" यत्यद्रूपं धर्म्मितावच्छेदकीकृत्येत्यर्थः तेन रूपेण तद्व्यावृत्तत्वं तत्तद्धर्म्मविशिष्टतद्व्यावृत्तत्वं प्रमेयत्वादिसामानाधिकरण्येन घटादौ साध्यनिश्चयदशायामपि शब्दोऽनित्यः शब्दत्वादित्यादावसाधारण्यसत्त्वाद्धर्म्मिनिवेशः प्रथमपक्षे वक्ष्यमाणाया निर्धर्म्मितावच्छेदकसाध्यनिश्चयविषयवृत्तिहेतोरसाधारण्यानुपपत्तेर्व्वारणाय धर्म्मितावच्छेदकनिवेशः साध्यव्याप्यवत्त्वेन पक्षातिरिक्तमात्रविषयकनिश्चयदशायामसाधारण्यानुपपत्त्यनवकाशात्पक्षस्यापि निश्चयविषयत्वमाविष्कर्त्तुं "सर्व्वाणी"ति सर्व्वपदेन सर्व्वत्वावच्छिन्नोद्देश्यताकबोधः केवलान्वयिसर्व्वत्वावच्छेदेन विधेयविषयक एव जन्यते इति तथाविधबोधस्यैव सर्व्वाणि साध्यवन्तीत्याकारकता तथाच विशिष्य पक्षे साध्यनिश्चयदशायामिव साध्यसन्देहविरोधिनः सर्व्वाणि साध्यवन्तीतिनिश्चयस्य

वन्ति प्रमेयाणीत्यादिनिश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्च-याद्तथात्वप्रसङ्गः। द्वितीये तु विशिष्य पक्षे साध्यनिश्चयं विनैव

---

सत्त्वेऽप्यसाधारण्याभावस्येष्टत्वात् "साध्यव्याप्यवन्ती"ति तथाच एतादृशनिश्चयदशायां विशिष्य पक्षे साध्यसन्देहस्यानिवृत्तेस्ता-दृशनिश्चयस्य नासाधारण्यन्नतिकारकत्वमितिभावः प्रथमपक्षे धर्म्मितावच्छेदकानिवेशात् सामान्यधर्म्मावच्छिन्नधर्म्मिकं विशिष्य-संशयानिवर्त्तकं निर्णयमिव निर्धर्म्मितावच्छेदकतया अप्रसक्तसंशय-निवर्त्तकताकं निश्चयमादायापि दोषदानं सम्भवतीत्यभिप्रेत्याह "सर्व्वाणि वे"ति पूर्व्ववत् साध्यत्वेन पक्षस्यापि निश्चयविषयत्वं स्फुटीकर्त्तुं सर्व्वाणीति साध्यवत्त्वावच्छिन्ने सर्व्वत्वविधेयकस्य साध्य-वन्तिसर्व्वाणीत्याकारकज्ञानस्य पक्षाविषयकस्यापि सम्भवात् सर्व्व-साध्यवदुद्देश्यकप्रमेयत्वविधेयकज्ञानानुधावनं तादृशज्ञानस्य वस्तुत्व-व्यापकसर्व्वत्वावच्छेदेन साध्यवत्तानवगाहितया तत् सत्त्वं न पक्षे साध्यसन्देहनिवर्त्तकमिति तदानीमसाधारण्यमक्षतमेवेतिभावः आदिपदात् शब्दोऽनित्यः शब्दत्वादित्यादौ सर्व्वाणि साध्याभाव-व्याप्यवन्ति साध्याभाववन्तीत्यादिनिश्चयपरिग्रहः अतथात्वमसाधा-रण्याभावः द्वितीयपक्षे तत्तद्व्यक्तित्वरूपे धर्म्मितावच्छेदक-विवक्षणे प्रथमपक्षोक्तप्रथमदोषस्य द्वितीयदोषस्य च यथाश्रुते-ऽप्यनवकाशात्तच दोषान्तरमाह "द्वितीये" इति विशिष्यधर्म्मिता-वच्छेदकप्रकारेण सामान्यतः पक्षे साध्यवत्तानिश्चयं विना पक्ष-मात्रवृत्तिहेतौ साध्यवद्वृत्तित्वघटितव्याप्तिनिश्चय एव न सम्भवती-

साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम्। तेनासाधारणस्य साध्यतद्भावोपस्थापकतया दूषकत्वपक्षे नाव्याप्तिः।

---

शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिः। नैष दोषः, यादृशव्याप्तिग्रहे सति नासाधारण्यं तद्ग्रहाभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तद्ग्रहस्य चाभावेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात्, विशिष्टाभावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत्। एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न कञ्चिदपि प्रति सव्यभिचारित्वं स्यात्, स्याद्वा तदपि

---

त्येतदभिहितं। अथवा विशिष्य विशेषधर्मं धर्मितावच्छेदकीकृत्य उक्तविवक्षणे सामान्यधर्मधर्मितावच्छेदककनिश्चयदशायामप्येतद्दोषस्य सम्भवात्तादृशस्थलसंग्रहाय विशेषधर्मस्य धर्मितावच्छेदकत्वानुसरणं, "विशेषलक्षणस्ये"ति विशेषणादित्यग्रिमेणान्वयः वैशिष्ट्यञ्च सामानाधिकरण्यप्रत्यासत्त्या बोध्यं तदविशेषितस्यैव तस्य संशयप्रयोजकतया सव्यभिचारसामान्यलक्षणस्यातिव्याप्तिं वारयितुमाह "साधारण्ये"ति एतच्च व्याप्तिग्रहदशायां साधारणसंग्रहाय, वैशिष्ट्यं विशेषणताविशेषविषयतोभयघटितसामानाधिकरण्येन बोध्यं "कञ्चिदपी"ति व्याप्तिग्रहशून्यपुरुषं प्रत्यपीत्यर्थः ननु तत्पुरुषीयव्याप्तिग्रहाभावस्तत्पुरुषीयासाधारण्यशरीरे निवेशनीय इति नायं दोष इत्यत आह "स्याद्वेति" "तदपि" सामान्यव्यभिचारित्वमपि "तत्त-

तत्तत्पुरुषघटितमसाधारण्यवत् साध्यादिव्याप्यवत्त्वेन रूपेण साध्यादिमत्त्वनिश्चयेऽव्याप्तिप्रसङ्गाच्च। न हि घटोऽनित्यो घटाद्व्यावृत्तं शब्दत्वमितिवत् अनित्यत्वव्याप्यवतो व्यावृत्तं शब्दत्वमिति तदानीं निश्चयः। अभिहितञ्च निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयोजकं किन्तु साध्यतदभावाभ्यां सहचरितत्त्वमिव तत्सहचरिता-

---

त्पुरुषघटित"मिति तथाचासाधारण इव साधारणेऽपि पुरुषविशेषनियन्त्रितसव्यभिचारव्यवहारापत्तिः धूमादौ साध्ये वह्न्यादिरमुकं प्रति व्यभिचारीति व्यवहाराभावेनेष्टापत्तेरयोगादितिभावः यथाश्रुतैतत्कल्पे प्रथमपक्षीयप्रथमदोषमप्याह "साध्यादीति" आदिपदाभ्यां साध्याभावपरिग्रहः। ननु तदानीमसाधारण्याभावेऽपि तद्भ्रमादेवानुमितिप्रतिबन्धादिति शङ्कानिराचिकीर्षया तद्भ्रमाभावमप्युपपादयति "नहीति" "तदानीं" पक्षे साध्यसन्देहदशायां, तदानीं तत्र तद्व्याप्यवत्तासंशयस्यौचित्या वर्जितत्वाद्व्याप्यववृत्तित्वस्यापि हेतौ संशयादितिभावः। उक्तविवक्षायामेतद्दोषानवकाशात् साधारणे पुरुषविशेषनियन्त्रितसव्यभिचारव्यवहारे कदाचिदिष्टापत्तेश्च सम्भवाद्दोषान्तरमाह "अभिहितञ्चेति" परोक्तत्यादिना अयं घटः एतत्त्वादित्यादि—पूर्वपक्षीयपङ्क्तिव्याख्यानावसर इति शेषः। "न संशयप्रयोजकमि"ति तथाच* तदादायासाधारणे न लक्षणसङ्क्रमनमसम्भवदिति भावः। ननु तर्हि कीदृशमसाधारण्यं संशयप्रयोजकमत आह "किन्त्विति" "तत्सहचरिते"ति

---

* ख०, तदादायासाधारण्ये लक्षणसङ्क्रमनं न सम्भवतीतिभावः।

भावप्रतियोगित्वम्, व्याप्यविरुद्धयोस्तु तत्त्वेननिश्चितयोर्दर्शने विशेष-दर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह "विरुद्धान्येति"। विशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधि-विशेषणं। तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परस्परासामाना-धिकरण्यादीनाञ्च निरासः। पक्षपदञ्च धर्म्मिमात्रपरं। तथाच

साध्यतदभावसहचरितेत्यर्थः एतादृशासाधारण्यस्य न हेतुदोषता-सम्भवः सद्धेतुसाधारण्यात् अनुमितिप्रतिबन्धकज्ञानाविषयत्वेन दोष-सामान्यलक्षणानाक्रान्तत्वाच्चेति भावः ननु व्याप्यविरुद्धसाधारण्यै-तादृशधर्म्मस्य संशयप्रयोजकत्वे व्याप्यादिदर्शनादपि संशयापत्ति-रित्यत आह व्याप्यविरुद्धयोरिति व्याप्यादिग्रहशून्यकाले व्याप्यादि-दर्शनस्य संशयाप्रतिबन्धकतया "तत्त्वेन निश्चितयो"रिति व्याप्य-त्वादिना अनिश्चितस्य व्याप्यादेर्निरुक्तरूपज्ञानात् संशय इष्ट एवेति भावः विरुद्धान्यत्वस्य हेतुविशेषणत्वे असाधारणासंग्रहः विरोध-पदार्थं साध्यासामानाधिकरण्यत्वादिना निवेश्य तदन्यत्वेनानुमिति-विरोधिविशेषणेऽपि साध्याप्रसिद्ध्यादिवारणासम्भवः इत्यत आह "विशिष्टे"ति साध्यतावच्छेदकादिविशिष्टेत्यर्थः एतदर्थः पूर्व्वपक्ष एव विवृतः। यथाश्रुतमूलतो धर्म्मिविशेषणताया एव लाभाद"र्थत इति" तात्पर्य्यबलत इत्यर्थः "विरोधिविशेषणं" अनुमितिविरोधि-विशेषणं अवृत्तित्वे परस्परासामानाधिकरण्ये च साध्यसाधनयो-रित्यनुषज्यते पक्षतानिवेशे प्रयोजनाभावादाह "पक्षपद"मिति पक्षवृत्तित्वस्य धर्म्मिविशेषणत्वे स्वरूपासिद्धस्य व्यभिचारिणोऽसंग्रह-

यद्यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तच्च तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः। साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा, बाधप्रतिरोधौ तु धर्म्मिविशेषितत्वात् न तादृशौ। सर्व्वं साध्याभाववत् तद्व्याप्यवद्वेत्यादिकञ्च साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधि साध्यानुमितिसामान्याविरोधित्वं वा विशेषणम्। तेनैवेति। तेनानुमितिविरोधिना विपक्षवृत्तित्वादिना। एवकारेणानुगमकं रूपं व्यवच्छिद्य तस्य हेत्वाभासताव्यवच्छेदकत्वं निरस्यति हेत्वाभासलक्षणानुरोधेनेति तेनानुमितिविरोधित्वघटितलक्षणकरणेन असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषणत्वपक्षे नाव्याप्तिरितरथा पुनरव्याप्तिरेव। साध्याभावज्ञापकत्वेन साक्षात् साध्यवत्तानुमितिविरोधित्वेन॥

इति दीधितेः सव्यभिचारः॥

---

प्रसङ्गः हेतौ पक्षवृत्तित्वग्रहाविरोधित्वेन विरोधिविशेषणेऽपि बाधसत्प्रतिपक्षवारणमशक्यमेवेति पूर्व्ववत् पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिरितिदलद्वयेन व्याप्तिग्रहविरोधिधर्म्मवत्त्वस्य विवक्षणे च मणिकारमतसिद्धस्य साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यासंग्रहः विशेषणान्तरं प्रक्षिप्य बाधादिवारणे गौरवमित्यभिप्रेत्य पूर्व्वपक्षोक्तरीतिं परित्यज्य प्रकारान्तरेण बाधादिकं वारयितुं उक्तदलद्वयनिष्कृष्टार्थमाह "तथाचे"ति "यद् यद्धर्म्मी"ति सधर्म्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानध-

र्म्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तादृशधर्म्मवत्त्वमित्यर्थः* समूहालम्बनात्मकस्य उदासीनपदार्थविषयकनिश्चयस्याप्यनुमिति-प्रतिबन्धकतया उदासीनपदार्थविषयकनिश्चयसामान्यस्यापि विपरीतविषयकसमूहालम्बनात्मकप्रकृतानुमितिप्रतिबन्धकतया तत्रातिव्याप्तिवारणाय सामान्यपदद्वयं, हेतुमत्ताज्ञानासमानकालीन-व्यभिचारनिश्चयस्य व्यभिचारनिश्चयसामान्यान्तर्गतस्य स्वसमान-

* अथ नित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वं शब्दत्ववान् शब्दः शब्दत्ववान् घटः इत्यादिज्ञानं तादृशनिश्चयसामान्यान्तर्गतं तत्समानकालीनहेतुमत्तानिश्चयसमानधर्म्मितावच्छेदककानुमितिसामान्यान्तर्गत-घटो नित्यः शब्दो नित्यः इत्यादि नानानुमितिसाधारणैकप्रतिबध्यताया एवाभावात् तादृशानुमितित्वव्यापिका न कापि प्रतिबध्यता इति चेदत्र केचित् स्वसमानकालीननिश्चयीयहेतुप्रकारतानिरूपितविशेष्यतावच्छेदक-यत्किञ्चिद्धर्म्मावच्छिन्नविशेष्यताकानुमितित्वव्यापकत्वस्य निवेश्यत्वात्तादृश-यत्किञ्चिद्धर्म्मावच्छिन्नविशेष्यताकानुमितित्वव्यापकत्वस्य तत्तद्धर्म्मावच्छिन्न-विशेष्यताकहेतुमत्त्वज्ञानविशिष्टासाधारण्यज्ञानस्य प्रतिबन्धकतानिरूपितप्रतिबध्यत्वसत्त्वान्नाव्याप्तिरिति धर्म्मितावच्छेदककहेतुमत्तानिश्चयेत्यत्र हेतुप्रकारता हेतुतावच्छेदकतापर्य्याप्त्यवच्छेदकताकत्वेन निवेशनीया अतो न वह्निव्यापकीभूताभावप्रतियोगि जलं जातिमत्त्वान् ह्रद इत्यादि ज्ञान-मादाय दोषः उभयत्र विशेष्यतावच्छेदकता निरवच्छिन्ना ग्राह्या तेन जलवान् ह्रद इत्यादि निश्चयसमानधर्म्मितावच्छेदककजातिमान् वह्नि-मानित्याद्यनुमित्यन्तर्भावेण प्रतिबध्यतायाः एवं जातिमान् जलवान् इत्यादि निश्चयकालीनदोषविषयकनिश्चयानन्तर्भावेण प्रतिबन्धकतायाश्च व्यापकत्वभङ्गेऽपि न क्षतिः। हेतुमत्तानिश्चयस्यावच्छेदावच्छेदेन बोध्यः अतः सामानाधिकरण्येनानुमितिं प्रति सामानाधिकरण्येन हेतुमत्ता-

निश्चयकालीनासाधारण्ये नाव्याप्तिः। अतएव संयोगेन वह्निसाध्यके तत्सम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वह्निहेतुकस्थले व्यभिचारनिश्चयस्य भावत्वावच्छिन्नांशे नियतहेतुविषयकत्वेन वह्निमान् आधेयत्वादित्यादौ वह्न्यभाववद्वृत्तिवृत्तित्वरूपे व्यभिचारविषयकनिश्चयस्याधेयत्वात् नियत-हेतुविषयकत्वेन च लक्षणगमनादेव प्रथमकालीनान्ताप्रयुक्तस्योक्तस्व-समानकालीनहेतुमत्तानिश्चयासिद्ध्याऽसम्भवस्यासङ्गतिरिति परास्तम्। अभावत्वाद्यवच्छेदेन हेतुमत्तानिश्चयासत्त्वात् विशिष्टाधेयत्वप्रकारताया हेतुतावच्छेदकपर्य्याप्त्यवच्छेदकताकत्वाभावाच्च। नच वह्नित्वावच्छेदेन प्रमेयत्वविशिष्टवह्निनिरूपितविषयित्वस्य यत्र साध्यता प्रमेयत्वस्य हेतुता तत्र प्रमेयवह्निनिरूपितविषयितावान् प्रमेयत्वादित्यादौ प्रमेयत्वविशिष्ट-वह्निनिरूपितविषयित्वाभाववद्वृत्तिप्रमेयत्वात्मकव्यभिचारे लक्षणगमन-सम्भवस्तत्र वह्नित्वसामानाधिकरण्यघटितधर्म्मस्य प्रतियोगितावच्छेदकत्वा-सम्भवाद्वह्नित्वसामानाधिकरण्ये प्रमेयत्वावगाहिज्ञाने तदभावस्य सत्त्वा-दिति वाच्यं एतल्लक्षणे वह्नित्वावच्छेदेन प्रमेयत्वविशिष्ट वह्न्यादेरभावस्य साध्यत्वे प्रमेयत्वस्य हेतुत्वे प्रमेयत्वविशिष्टवह्निविशिष्टवह्न्याद्यात्मकबाधे-ऽतिव्याप्तिस्तत्रज्ञानस्य वह्नित्वावच्छेदेन हेतुमत्ताविषयकत्वनैयत्येन स्वसमान-कालीन निश्चयीयहेतुप्रकारतानिरूपितविशेष्यतावच्छेदकीभूत-तादृशय त्किञ्चिद्धर्म्मावच्छिन्नविशेष्यकसाध्यानुमितिसामान्यविरोधित्वात् सधर्म्मि-तावच्छेदकहेतुमत्तानिश्चये स्वसमानकालीननिश्चये च स्वभिन्नत्वं निवेश्यं घटः प्रमेयः इत्यादि तादृशनिश्चयसमानधर्म्मितावच्छेदककानुमितिसामा-न्याविरोधित्वाद्वारणीया तावतैव केवलदोषविषयकज्ञानस्य तादृशनिश्चय-सामान्यान्तर्गतस्वभिन्न-स्वसमानकालीनहेतुमत्तानिश्चयाप्रसिद्ध्या असम्भवः अतः प्रथमकालीनान्तमिति साधु सङ्गच्छते। प्रथमनिश्चये स्वभिन्नत्वानुक्तौ यादृशनिश्चयसामान्यान्तर्गतसमूहालम्बनहेतुप्रकारकदोषविषयकनिश्चय-समानकालीन-स्वभिन्नहेतुमत्तानिश्चयाप्रसिद्ध्या असम्भव इति तन्निवेशः। अथवा तादृशबाधेऽतिव्याप्तिवारणाय स्वसमानकालीनहेतुमत्तानिश्चयीय-

मुख्यविशेष्यतानिरूपितावच्छेदकत्वं यत्किञ्चिद्धर्म्मे निवेशनीयं बाधादिज्ञानस्य तादृशयत्किञ्चिद्धर्म्मावच्छिन्नविशेष्यकानुमितिसामान्याविरोधित्वान्नातिव्याप्तिः। न च प्रमेयवह्न्यभावादिसाध्यकस्थले वह्निवृत्तिप्रमेयवह्न्यादिरूपबाधेऽतिव्याप्तिः तादृशयत्किञ्चिन्निश्चयस्य स्वसमानकालीनहेतुनिश्चयीयतादृशविशेष्यतावच्छेदकवह्नित्वरूपयत्किञ्चिद्धर्म्मावच्छिन्नविशेष्यकानुमितिसामान्ये विरोधित्वादिति वाच्यं अवच्छिन्नविशेष्यत्वानवच्छिन्नत्वस्य मुख्यविशेष्यतायां अवच्छिन्नविषयत्वानवच्छिन्नत्वस्य वा तादृशविशेष्यतायां निविश्य तादृशबाधघटकप्रमेयत्वरूपहेतुप्रकारतानिरूपितमुख्यविशेष्यतायाः वह्निवृत्तित्वादिप्रकारतानिरूपितधर्म्मितावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नतया प्रमेयवह्निविशिष्टवह्न्यादिग्रहे हेतुप्रकारतानिरूपितविशेष्यतायाश्च प्रकारतावच्छिन्नतया बाधादिघटकधर्म्मस्य तादृशयत् किञ्चिदनन्तर्गतत्वादतिव्याप्त्यभावात् एवञ्च प्रथमकालीनत्वानुक्तौ तादृशनिश्चयसामान्यान्तर्गतकेवलदोषविषयकनिश्चयसामान्ये स्वसमानकालीनहेतुमत्त्वानिश्चयसमानधर्म्मितावच्छेदककानुमितित्वव्यापकतावच्छेदकस्वनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वमिति लक्षणार्थः एतन्मते हेतुमत्तानिश्चये समानकालीनदोषविषयकनिश्चयस्य स्वसमानकालीनहेतुमत्तानिश्चयाप्रसिद्धा इत्यनेन यादृशविशिष्टविषयकनिश्चये न हेतुमत्तानिश्चयकालीनत्वनैयत्यं तादृशदोष एव लक्षणासम्भवाभाव इत्येवासम्भवपदार्थ इत्याहुः। वस्तुतस्तु सधर्म्मितावच्छेदकदलसत्वेऽपि व्यापकत्वं विना सामान्यस्य दुर्व्वचतया सधर्म्मितावच्छेदकहेतुमत्तानिश्चयकालीनयादृशविषयकनिश्चयत्वव्यापकं

न हेतुमत्तानिश्चयसमानधर्म्मितावच्छेदककानुमितित्वव्यापक-
पितप्रतिबन्धकत्वं तादृशधर्म्मवत्त्वमित्येवार्थः एवञ्च सति
हमान् घटो वह्निमान् पर्व्वतोवह्निमान् इत्यादि
नानुमितेर्व्यापकैकप्रतिबध्यत्वाप्रसिद्धा असम्भवापत्तिरतः
कहेतुमत्तानिश्चयकालीनेत्यस्य कालिकसम्बन्धेन स्वाधि-
धिकरण्य-स्वप्रतियोगिकध्वंसवत्त्वैतत्त्रितयसम्बन्धेन कि-

कालीनहेतुमत्ताज्ञानाप्रसिद्धा असम्भवः स्यादिति प्रथमं कालीना- निश्चयविशेषणं निर्धर्म्मितावच्छेदकहेतुमत्तानिश्चयकालीनव्यभि चारनिश्चयकालीनहेतुमत्ताज्ञानधर्म्मितावच्छेदकाप्रसिद्धा तद्दोष तादवस्थ्यमतो हेतुमत्ताज्ञाने सधर्म्मितावच्छेदकत्वविशेषणं। अनु मितिसामान्यान्तर्गतायां स्वसमानकालीनहेतुमत्ताज्ञानासमान धर्म्मितावच्छेदककसाध्यानुमितौ हेतुतावच्छेदकावच्छिन्नस्य साध्य व्यापकीभूताभावप्रतियोगित्वज्ञानं न प्रतिबन्धकं नित्यत्वव्यापकी भूताभावप्रतियोगिशब्दत्वमित्यादिज्ञानदशायां अन्यधर्म्मिताव च्छेदकक-शब्दत्ववत्तानिश्चयेऽप्ययं नित्य इत्यादिज्ञानोत्पत्ताव- विवादात् इत्यसाधारणादावव्याप्तिरतः समानधर्म्मितावच्छेदकान्त अनुमितिविशेषणं तथाचेदन्त्वादिधर्म्मितावच्छेदककनित्यत्वादि विशिष्टबुद्धौ शब्दत्वादिधर्म्मिकनित्यत्वादिव्यापकीभूताभावप्रति-

च्चिद्धर्म्मावच्छिन्नविशेष्यकहेतुमत्ताज्ञानविशिष्टत्यर्थः। स्वसमानकालीनत्वस्य तादृशसम्बन्धेन स्वाधिकरणत्व-स्वसमानाधिकरणस्वद्वृत्तित्वं प्रतियोगित्व एतत्त्रितयसम्बन्धेन स्वविशिष्टेत्यर्थः। प्रथमहेतुमत्ताज्ञान स्वनिरूपकत्व-स्वान्यहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपकत्वोभयसम्बन्ध हेतुतावच्छेदकावच्छिन्नप्रकारताविशिष्टान्यत्वेन विशेषणीयं, एवञ्च हेतु तावच्छेदकावच्छिन्नप्रकारताविशिष्टान्यकिञ्चिद्धर्म्मावच्छिन्नवि- पितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानविशिष्ट-या- यकनिश्चयसामान्यं स्वविशिष्टहेतुमत्ताज्ञानीय-धर्म्मित विशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकहेतुताव[illegible]ाव साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिप्रकारकानुमितित्व- तानिरूपकं तादृशत्वं सव्यभिचारित्वमिति फलितार्थः।